अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला–४९

श्रीशेषचक्रपाणिपण्डितविरचितम्

# कारकतत्त्वम्

(मातृकासंपादनम्)

मातृकासम्पादकः
गोपीकृष्णन् रघुः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



राष्ट्रहिताय संस्कृतम्

कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
तथा
न्यू भारतीय बुक कॉर्पोरेशन, नव देहली

2020

अखिलभारतीय–प्राच्यविद्यासम्मेलनम्
शतवर्षमहोत्सवग्रन्थमाला – 49

श्रीशेषचक्रपाणिपण्डितविरचितम्

# कारकतत्त्वम्

(मातृकासंपादनम्)

मातृकासम्पादकः
गोपीकृष्णन् रघुः

प्रधानसंपादकः
आचार्यः श्रीनिवासः वरखेडी
कुलगुरु

संपादकः
आचार्यः मधुसूदनः पेन्ना
संचालकः संशोधन–प्रकाशनविभागः



कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः
रामटेकम्, जि. नागपुरम् (महाराष्ट्रम्)
एवं
न्यू भारतीय बुक कॉरपोरेशन, दिल्ली

शीर्षकम् — श्रीशेषचक्रपाणिपण्डितविरचितम्
कारकतत्त्वम्

मातृकासम्पादक: — गोपीकृष्णन् रघुः

प्रधानसंपादक: — आचार्यः श्रीनिवासः वरखेडी
कुलगुरु, क.का.सं.वि., रामटेकम्

संपादक: — आचार्यः मधुसूदनः पेन्ना
संचालक: संशोधन–प्रकाशनविभागः
क.का.सं.वि., रामटेकम्

संपादकमण्डलम् — डॉ. दिनकर मराठे, क.का.सं.वि., रामटेक
डॉ. वीना गाणु, नागपुर.

प्रकाशनवर्षम् — २०२०

आवृत्तिः — प्रथमा

मूल्यम् — 125.00

आय.एस.बी.एन. — 9788183154277

मुखपृष्ठम् — श्री. उमेश पाटील, क.का.सं.वि., रामटेकम्

प्रकाशक: — कुलसचिवः,
कविकुलगुरु–कालिदास–संस्कृत–विश्वविद्यालयः,
प्रशासकीयभवनम्, मौदामार्गस्य, रामटेकम्.

एवं

न्यू भारतीय बुक कॉरपोरेशन
२०८, द्वितीय तल, प्रकाशदीप बिल्डिंग,
४७३५/२२, अंसारी रोड, दरिया गंज,
नई दिल्ली – ११०००२
फोन नं. : २३२८०२१४, २३२८०२०९



एस. के. आफॉसेट, दिल्ली

## PREFACE

It is indeed a matter of great pleasure and pride for Kavikulaguru Kalidas Sanskrit University, Ramtek to have this rarest opportunity of hosting the 50th session of All India Oriental Conference at Nagpur. This AIOC-50th session at Nagpur will be forever remembered by all as the year 2019 also happens to be the year of Centenary Celebration of AIOC. The premier objective with which the great scholars of yester years had contemplated and established this national academic event called All India Oriental Conference has been achieved through these years with scores of young scholars contributing significantly to the treasure house of knowledge through their valuable research work.

The research of yore and of the present should be properly recorded so as to make it easily available to all lovers of knowledge and wisdom in the years to come. With this objective, we have contemplated to commemorate the 100th year of this grand event of 50th session of AIOC by way of publishing 100 monographs on different subjects in four languages viz., Sanskrit, Hindi, Marathi and English. It is no doubt a herculean task but still worth of it, for the reason that these 100 monographs will inspire many young scholars to take upon a fresh study and research of the oriental subjects with more vigour and zeal.

The AIOC Centenary Publication Series includes wide variety of subjects like Literature, Language, Veda, Indian Philosophy, Sanskrit Grammar, Law, Children Literature, Yoga, Astronomy and Astrology, Ayurveda, Pali, Prakrit, Jain, Buddhism, Education, Library Science, Poetics, Aesthetics, and Indology. It also includes reprint of some rare texts of academic importance which have gone out of print are not easily available. We wish to mark this centenary celebrations with this series that connects the glory of the past and aspirations of future. I place on record my sincere gratitude to all the authors of these monographs who have kindly contributed to the richness of this

series.

I am confident that the books published in these series will definitely inspire the lovers of Oriental Learning in general and of Sanskrit Language and Literature in particular.

On this occasion, we have published a memorable book of all the speeches of Section-Presidents of all previous sessions of AIOC. It is indeed a very capacious addition to any collection. I with all respect thank two eminent scholars of our times - Prof. Gautam Patel, President and Prof. Saroja Bhate, General Secretary, the torch bearers of AIOC who have not only encouraged us in this venture but also made all efforts to provide these valuable historical speeches for us. I thank all executive members of AIOC and my colleagues of the varsity for making this event a grand success.

My words fall short in describing the painstaking efforts and scholarly commitment of my esteemed colleague Prof. Madhusudan Penna, local secretary of this session in bringing out this series.

I also take this opportunity to profusely thank Shri. Subhash Jain and Shri Dipak Jain, the proprietors of New Bharatiya Book Corporation, New Delhi for their enthusiastic approach and timely work with all precision and grace.

Let us all sanctify ourselves in the eternal flow of wisdom by reading these books and recommending these to others also!

सरस्वती श्रुतिमहती महीयताम्

Ramtek
10th January 2020

Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU

## Kavikulaguru Kalidas Sanskrit University
## All India Oriental Conference

**100th Year 50th Session**
**10th-12th January, 2020**

### Chief Patron
Hon'ble Nitin Gadkari
Minister of Road, Transport & Highways of India

### Patron
Prof. Srinivasa Varakhedi
Vice Chancellor, KKSU, Ramtek

### AIOC President
Prof. Gautam Patel
Chairman, Sanskrit Seva Samiti, Ahmedabad.

### AIOC General Secretary
Prof. Saroja Bhate
Professor of Sanskrit (Retd.), Pune University, Pune

### AIOC Local Secretary
Prof. Penna Madhusudan
Dean, KKSU, Ramtek

### Additional Local Secretary
Dr. Harekrishna Agasti
Dr. Kalapini Agasti
Dr. Dinakar Marathe
Dr. Parag Joshi

### Organising Committee
Prof. C.G. Vijayakumar, Registrar (I/c) & Dean, KKSU, Ramtek
Prof. Nanda Puri, Dean, KKSU, Ramtek
Prof. Krishnakumar Pandey, Dean, KKSU, Ramtek
Prof. Laita Chandratre, Dean, KKSU, Ramtek
Dr. Ramachandra Joshi, Finance Officer, KKSU, Ramtek
Dr. Umesh Shivahare, Controller of Examination, KKSU, Ramtek
Dr. Dipak Kapade, Librarian, KKSU, Ramtek
Dr. Renuka Bokare, PRO, KKSU, Ramtek

Shri. Rajivranjan Mishra, Technical Head, KKSU, Ramtek
Shri. Pravin Kalambe, Security Officer, KKSU, Ramtek

## Reception Committee

Prof. Srinivasa Varakhedi, Chairperson Reception Committee & VC, KKSU
Parampujya Govindagiri Swamiji, Rishikesh
Prof. P.T. Chande, Former VC, KKSU
Prof. Uma Vaidya, Former VC, KKSU
Prof. Vijendra Kumar, VC, National Law University, Nagpur
Prof. Rajnish Shukla, VC, National Hindi University, Wardha
Prof. Vinayak Kane, VC, RTM Nagpur University, Nagpur
Shri. Krupal Tumane, Member of Parliament
Shri. Girishji Vyas, Member of Legislative Council
Shri. Chandrashekhar Bawankule, Guardian Minister, Nagpur
Prof. Vishram Jamdar, Director, VNIT, Nagpur
Dr. Bhushankumar Upadhyay, Commissioner of Police, Nagpur
Shri. Vijay Phanshikar, Editor, The Hitavada, Nagpur
Shri. Rajkumar Tirpude, Tirpude Group of Insitutions, Nagpur
Shri. Mohabbat Singh, Tuli International, Nagpur.
Shri. Chandragupta Varnekar, Principal Retd., Nagpur
Shri. Suresh Sharma, Baidyanath, Nagpur
Shri. Prabhakar Rao Mundle, Dharampeth Educational Institutions, Nagpur

## Executive Committee

Prof. G. U. Thite,
Vice President

Dr. Brijeshkumar Shukla,
Treasurer

## Members

Dr. Rajni Satish Chandra Jha
Prof. Shukla Ramakant
Dr. Behera Ranjit
Dr. Meena Shukla
Dr. Nirmala Kulkarni
Dr. Roy Gauri Nath
Dr. Tripathi Uma Rani
Dr. Pushpa Jha
Dr. Basu Ratna
Dr. Mithilesh Kumar
Prof. Singh Prasoon Dutta
Shri. Mishra Arun Ranjan
Dr. Mishra Baidyanath
Dr. Tripathi Rajendra Rasraj
Shri. Harshdev Madhav
Dr. Kamdev Jha
Dr. Parinita Deshpande
Dr. Jha Udayanath (Ashok)

# सूचीपत्रम्

# निवेदनम्

सुविदितमेव समेषां विदुषामिदं यत् विश्वगुरुरिति प्रथितेऽस्मिन् भारतवर्षे तदीयज्ञानभाण्डागारः बह्वीषु प्राचीनमातृकासु निहितः वर्तत इति। ताः मातृकाः बहुषु पुरातनगृहेषु मातृकागारेषु च धूलिधूसरिताः मुक्तिं कामयमानाः शेरते। अतः एव तादृश्याः कस्याश्चित् मातृकायाः उद्धारः स्यात् येन एतावता अनुद्घाटितं तथ्यं किमपि प्रकाशितं स्यादिति विचिन्त्य कार्येऽस्मिन् प्रवृत्तिः जातः। सर्वासां विद्यानामाधारविद्यत्वेन परिगण्यते व्याकरणशास्त्रम्। तस्मात् तच्छास्त्रगतां मातृकामेकामाश्रित्य कार्यमिदं विहितमस्ति।

कार्येऽस्मिन् साहाय्यं विहितवन्तः अस्माकमाचार्याः श्रीपाद-सत्यनारायणमूर्तिवर्याः, आचार्याः जानमद्दिरामकृष्णमहाभागाः, राणि लक्ष्मीनरसिंहशास्त्रिमहोदयाः, विरूपाक्षजड्डीपालवर्याः, सिहेच्. पि सत्यनारायणवर्याश्च। तेभ्यः मम आधमर्ण्यमस्मिन्नवसरे प्रकाशयामि। सम्पादनार्थं मातृकां प्रदाय साहाय्यमचारितवद्भ्यः चेन्नैस्थस्य सर्वकारीयप्राच्यविद्या-मातृकाग्रन्थालस्य, तिरुवनन्तपुरस्थस्य प्राच्यविद्यामातृकाग्रन्थालयस्य च अधिकारिभ्यः धन्यवादान् ज्ञापयामि।

पुस्तकस्यास्य प्रकाशनार्थं नियतम् अस्मान् प्रोत्साहितवद्भ्यः अस्मद्सुहृद्वरेभ्यः दिनकरमराठेवर्येभ्यः, पुस्तकस्य प्रकाशकेभ्यः कविकुलगुरुकालिदासविश्वविद्यालयस्य कुलपतिभ्यः माननीयेभ्यः श्रीनिवासवरखेडीमहोदयेभ्यः, कुलसचिवेभ्यः विजयकुमारमहोदयेभ्यः, समीचीने काले अस्य प्रकाशनाय अवकाशं कल्पितवद्भ्यः प्राच्यविद्यासङ्गोष्ठ्याः सचिवेभ्यः पेन्ना मधुसूदनमहाभागेभ्यः, पुस्तकस्य अक्षरपरिष्कारादिकार्ये च साह्यम् आचरितवद्भ्यः अस्माकं विभागस्य शोधच्छात्रेभ्यः, संस्कृताध्ययनविभागस्य समायोजकेभ्यः स्वामिजपसिद्धानन्देभ्यः, मुद्रकेभ्यः, सर्वेभ्यः प्राबन्धिकेभ्यः च सविनयं धन्यवादाः निवेद्यन्ते अस्मिन् प्रसङ्गे।

सम्पादकः

# उपोद्घातः

इदमन्धन्तमः कृत्स्नं जायेत भुवनत्रयम्।
यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।

इत्येवमुक्तरीत्या संसारप्रदीपकः भुवनत्रयज्योतिः शब्दः। स हि कारणं सकलव्यवहारस्य। व्यवहारो हि जगज्जीवकम्। तथा च व्यवहारकरणभूतः शब्दः जगज्जीवको भवति।

यदा च वस्तुना व्यवहरामः तदा तस्य वस्तुनः च्युतिः अवश्यं भवति। तदत्र शब्देऽपि अन्वेति। अतस्तादृशच्युतिनिवारणाय, शब्दस्य अपभ्रंशादि-भ्रमवारणपूर्वकं शुद्धाशुद्धज्ञानाय च शब्दानुशासनशास्त्रस्य प्रवृत्तिरभूत्। तद्धि शास्त्रं व्याकरणनाम्ना जगति प्रथीयते।

व्याक्रियन्ते शब्दाः अनेनेति व्युत्पत्त्या कृधातोः करणघञन्तरूपमिदं व्याकरणपदम्। शास्त्रे चैतस्मिन् प्रकृतिप्रत्ययादिविभागद्वारा शब्दानां साधुत्व-असाधुत्वनिबन्धनं क्रियते इति अस्य शब्दानुशासनमिति च नामान्तरम्।

सप्तद्वीपायां वसुमत्यां वेदेतिहासपुराणशास्त्रकाव्यनाटकादिषु विस्तृता इयं गैर्वाणवाणी। इमाञ्च वाणीं सूपत् बध्नातुं नैकानि व्याकरणानि प्रवृत्तानि संदरीदृश्यन्ते। तेषु च नवव्याकरणानि प्रसिद्धतमानि वरीवर्ति। तानि च-

ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतञ्चापिशलं शाकलं पाणिनीयकम्।। इति

एषु च केचित् वेदविषयेषु प्रवृत्तमासीत्, केचित्तु लौकिकभाषायां प्रवृत्तमासीत्। अन्यानि च उभयत्र लौकिकवैदिकभाषायाञ्च।

एषु चोभयथा प्रवृत्तेषु व्याकरणेषु समग्रत्वेन सम्पूर्णत्वेन सरलत्वेन व्यवस्थितत्वेन च मुकुटस्थानमारोहति पाणिनीयकं शास्त्रम्। कालेऽस्मिन्नपि नास्य शास्त्रस्य महत्वस्य किञ्चिदपच्युतिः दृश्यते। एतावानस्य महिमा यत् संस्कृतस्य व्याकरणं नाम पाणिनीयकमित्येव सर्वैः विज्ञायते।

अस्य च पाणिनीयस्य नामान्तरमस्ति त्रिमुनिव्याकरणमिति। इदञ्च शास्त्रं पाणिनि-कात्यायन-पतञ्जलिभिः त्रिभिः मुनिभिः प्रावर्तितत्वात् कारणात्। तत्र हि

भगवान् पाणिनिः सूत्राणि रचयामास। वार्तिकानि तदुपरि वाक्यकृता कात्यायनेन व्यरचिषतन्त। तयोश्च भाष्यं महामुनिः पतञ्जलिः समकल्पयत्। ततश्च भाष्यात् शास्त्रस्यास्य बहुधा प्रवृत्तिरजायत।

## पाणिनिः।

त्रिमुनिव्याकरणस्य आद्यः बीजावापकः भगवान् पाणिनिः। असावाचार्यः महेश्वरात् अनुग्रहं प्राप्य शास्त्रमिदं सूत्ररूपेण न्यबन्धत। अस्य च मुनेः कालः ई.पू. 700 इति प्रायः सर्वैः अंगीक्रीयते। "सर्वे सर्वपदादेशाः दाक्षीपुत्रस्य पाणिनेः" इति भाष्यवचनेन पाणिनेः मातुः नाम दाक्षी इति अनुमातुं शक्यते। अस्य च मुनेः नामान्तराणि "शालातुरीयको दाक्षीपुत्रः पाणिराहिकः" इति वैजयन्ती कोशे। अत्रोक्तेन शालातुरीयक इति नाम्नः प्रमाणेन अयं शलातुर ग्रामीणः इति विवदन्ति केचन। अन्ये युधिष्ठिर मीमांसकादयः वाहीकग्रामीणः असावाचार्यः इति मन्वते।

अनेनाचार्येण व्याकरणं शास्त्रं सूत्ररूपेण समाकल्पयत्। सूत्रन्नाम-

अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः।। इति।

महेश्वरप्रसादेन चेमानि सूत्राणि मुनिना समाकल्पितानि। तत्र च श्रूयते पाणिनीय शिक्षायां-

येनाक्षरसमाम्नायमधिगम्य महेश्वात्।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः।। इति।

एवंभूतानि सूत्राणि अष्टाध्यायी इत्याख्ये ग्रन्थे अष्टसु अध्यायेषु विभज्य तत्र च प्रत्यध्यायं चतुर्षु पादेषु च विभज्य व्यवस्थापितमस्ति। इयमेव अष्टाध्यायी समग्रस्य व्याकरणस्य मूलभूतं जाज्वल्यते।

ग्रन्थेऽस्मिन् प्रायः उपचतुस्सहस्रं सूत्राणि वर्तन्ते। इदमेवास्य वैशिष्ट्यं यत् अस्य ग्रन्थस्य विषयविन्यासक्रमः अपि विषयावबोधको भवति।

## वररुचिः।

भगवतः पाणिनेरनन्तरं परम्परायां आचार्यस्थानमलङ्करोति वररुचिरिति प्रसिद्धः कात्यायनः। अनेन चाचार्येण सूत्राणामुपरि वार्तिकानि समाक्रियते । किन्नामवार्तिकमितिचेदुच्यते-

उक्तानुक्तदुरुक्तानां विचारो यत्र वर्तते।
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञो मनीषिणः।।

अत्र हि वार्तिकानां न सूत्रविरोधित्वं मुख्यविषयत्वं किन्तु सूत्रार्थविवरणमेव। प्रसङ्गे सति क्वचिद्विरोधोऽपि दृश्यते इत्येव।

पाणिनीयपरम्परायां अनेकेषु वार्तिककृत्सु प्रसिद्धः वार्तिकर्ता वररुचिः। अस्मै आचार्याय अत्र परम्परायां द्वितीयं स्थानं समुपाकल्पयत्। एते च दाक्षिणात्यः इति भाष्यवचनात् ज्ञायते। भाष्ये च "प्रियतद्धिताः दक्षिणात्याः" इति वचनं "यथा लौकिकवैदिकेषु" इति वार्तिकावसरे दृश्यते। अस्मात् कल्प्यते असौ दक्षिणात्य इति। अस्य कालः ई. पु. 400 इति बहूनां पण्डितानां मतम्।

## पतञ्जलिः

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योपाकरोत्तं प्रवरं मुनीना पतञ्जलिं प्राञ्जलिरानतोस्मि।।

वैयाकरणपरम्पारायां शेषावतारत्वेन प्रसिद्धः महाभाष्यकारः पतञ्जलिः। असौ हि मुनिः प्रमाणं त्रिमुनिव्याकारणे समस्तस्यापि विषयस्य। तदेव कथ्यते यथोत्तरं मुनीनां प्रामाण्यं इति। अनेन हि महात्मना कृतं महाभाष्यं न केवलं शास्त्रेऽस्मिन् किन्तु शास्त्रान्तरेऽपि प्रमाणत्वेन गण्यते। हरिः वदति -

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धनम् ।। इति।

नैकशास्त्रनिष्णातः मुनिः गोनर्ददेशीयः इति ज्ञायते। यतः स्वयमेव भाष्यकारः तत्र तत्र भाष्ये "गोनर्दीयस्त्वाह" इत्येवं सिद्धान्तान् प्रतिपादयति। ऋषेश्चास्य नामान्तराणि गोनर्दीयः, गोणिकापुत्रः नागनाथः, फणी, फणिभृत्, शेषः, शेषावतारः, अहिपतिः इत्येवं दृश्यते। अत्र गोणिकापुत्र इति नाम्नः अस्य माता गोणिका इति ज्ञायते। अस्य च कालः प्रायः शुङ्गवंशीय पुष्यमित्रस्यैव कालः इति बहूनां मतम्। तेन असौ ई.पु. 150 मध्ये आसीत् इति कल्प्यते।

असौ महामुनिः सवार्तिकं पाणिनिसूत्राणि प्रश्नोत्तररूपेण सूपत् प्रत्यवर्णयत् स्वीये महाभाष्ये। तेन सह स्वसिद्धान्तानमपि वर्णनं सुष्ठु प्रत्यपीपदत्। अत एव -

सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः।।

इति लक्षणं सङ्गच्छते भाष्ये। महाभाष्यस्य महत्वकथनपरमेवमेकम् आभाणकं दृश्यते लोके- "महाभाष्यं पठनीयं महाराज्यं वा पालनीयम्" इति।

एवं त्रिभिः महर्षिभिः प्रावर्तितमित्यतः अस्य व्याकरणस्य त्रिमुनिव्याकरणमिति प्रसिद्धिः। तदेव गुरुवन्दनं -

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम्।
पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम्।। इति।

शास्त्रेऽस्मिन् एषां सिद्धान्तानां प्रचार प्रसाराय अनेके विद्वांसः भर्तुहरि-कैय्यट-भट्टोजिदीक्षित-नागेशादयः महाधियः काले काले आविरभूवन्। तैः पालितं पोषितं व्याकरणशास्त्रमिदं महावृक्षवत् राराजते।

## ग्रन्थपरिचयः

व्याकरणशास्त्रेऽस्मिन् ग्रन्थानां द्विधा भेदः दृश्यते। एकः प्रकारः प्रक्रियाग्रन्थः इति। अत्र साधुशब्दानां रूपनिष्पत्तिप्रक्रिया प्रदर्श्यते। तत्रापि अष्टाध्यायीक्रमानुसारी प्रक्रियाक्रमानुसारी इति द्विधा विभागः प्रथमविभागे वर्तते। काशिका, कौमुदी इत्यादयः ग्रन्थाः अस्मिन् विभागे अन्तर्भवन्ति। एषु ग्रन्थेषु सूत्रं, सूत्रार्थः, उदाहरणप्रत्युदाहरणानि, प्रसङ्गे सति सिद्धान्तपरवाक्यमिति सामान्यः क्रमः वर्तते।

द्वितीयः विभागः अर्थवादग्रन्थाः। अत्र शास्त्रप्रोक्तानां सिद्धान्तानां चर्चा वर्तते। तत्र सिद्धान्तप्रतिपादनपूर्वकं परमतखण्डनम् एषामुद्देश्यम्। अस्मिन् विभागे प्रमुखाः इमे भवन्ति ग्रन्थाः- भर्तृहरेः वाक्यपदीयम्, कौण्डभट्टस्य वैय्याकरणभूषणसारः, नागेशभट्टस्य वैय्याकरणसिद्धान्तलघुमञ्जूषा इत्यादयः।

सम्प्रति सम्पाद्यमानः ग्रन्थः अपि व्याकरणशास्त्रे वादग्रन्थकोटौ प्रविशति। अत्र ग्रन्थे कारकस्य विषये चर्चा वरीवर्ति। यद्यपि सूत्राणामत्र व्याख्यानं दृश्यते तथापि न केवलं व्याख्यानं किन्तु परमतखण्डनपूर्वकं स्वसिद्धान्तमत्र प्रतिपादितमस्ति। अतः ग्रन्थोऽयं वादग्रन्थः इति वक्तुं शक्यते।

ग्रन्थेऽस्मिन् अष्टाध्यायीक्रमेण विषयाणामुपस्थितिः दृश्यते। तत्र अष्टाध्याय्यां प्रथमतया अपादानकारकविचारः, तदनु सम्प्रदानकारकविचारः, ततश्च करणकारकविचारः, अधिकरणकारकविचारः, कर्मकारकविचारः, अन्तिमे च कर्तृकारकविचारः इति क्रमः। अयमेव क्रमः ग्रन्थेऽस्मिन्नपि समुपलक्ष्यते।

अस्मिन् ग्रन्थे नैय्यायिकशैल्या लक्षणोदाहरणानि प्रतिपादितानि वर्तन्ते। प्रथमं चात्र स्वसिद्धान्तमुपपाद्य तदनु परमतमनूद्य खण्डयति। तत्रोभयत्रापि अवान्तरप्रश्नान् सोदाहरणं निरूप्य समादधाति ग्रन्थकारः। अस्मिन् ग्रन्थे कारकस्य तात्विकं पक्षं निरूपयति।

## ग्रन्थविषयः

ग्रन्थारम्भे ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं सरस्वति- गुरुवन्दनपूर्वकमङ्गलं करोति।

साधयति नेहमानन्देहविहीनं येह जगदीशम्।
सा मयि सेवकभावं प्राप्तो वाग्देवता दयताम्।।

विरोधिनां तिरोधानक्षमो यस्य गिरां गणः।
विश्वेश्वरगुरुं शेषवंशोत्तंसमहं वन्दे।। इति

सरस्वतीं प्रथमश्लोकेन इत्थं स्तौति- या इह नेहमानं देहविहीनञ्च जगदीशं साधयति मयि सेवकभावं प्राप्ते सा वाग्देवता दयताम् इति। ततश्च गुरुं विश्वेश्वरं वन्दते - यस्य गिरां गणः वाक्समूहः विरोधिनां स्वसिद्धान्तखण्डनक्षमाणां तिरोधानक्षमः तादृशं शेषवंशोत्तंसं विश्वेश्वरगुरुम् अहं वन्दे इति।

मङ्गलाचरणानन्तरं विषयप्रस्तावः क्रियते कारकतत्त्वश्चिन्त्यते इत्यादिना। तत्र पक्षत्रयं समादृत्य लक्षणत्रयं कारकत्वस्य प्रतिपादयति। तदनु एकैकस्य लक्षणस्य समन्वयादिकं कृत्वा परमतं दूषयन् कारकसामान्यलक्षणविचारं परिसमापयति।

प्रथमतः शक्तिः कारकमिति पक्षे अपादानत्वाद्यन्यतमम् इति लक्षणं प्रोक्तम्। वक्ष्यमाण-अपादानत्वादिशक्तिः कारकम् इति तदर्थः।

द्वितीयं शक्तिमत् कारकमिति पक्षे अपादानाद्यन्यतमत्वम् इति लक्षणम्। अपादानादिशक्तिमत् कारकमिति तदर्थः।

सङ्केतविशेषसम्बन्धेन कारकशब्दः कारकत्वमिति तृतीयं लक्षणम्। अत्र च सङ्केतविशेष इत्यनेन शास्त्रबोधित कर्तुरीप्सिततमेत्यादि स्वीक्रियते न लोकव्यवहारे सामान्यम्। एवं कारकविधायकशास्त्रबोधितार्थवत्त्वं कारकमिति तदर्थः सिद्धः।

कारकशब्दार्थः विचारितः। क्रियान्वयि सत् क्रियानिमित्तं कारकमिति केषाञ्चिन्मतम्। नटस्य श्रृणोतीत्यादौ अध्याहृतगानक्रियाद्वारा नटस्य क्रियान्वयित्वात् तत्रातिव्याप्तिरिति तन्निरस्तम्। अन्यथा श्रवणक्रियानिरूपितकारकत्वं नटस्यापद्येतेति तदाशयः। क्रियान्तरं प्रति तस्य कारकत्वेऽपि प्रकृतक्रियां प्रत्यकारकत्वात् तद्घटितलक्षणस्यातिव्याप्तिरिति भावः।

किञ्च तल्लक्षणे अन्वयित्वमुपधानं योग्यता वेति विचारोऽपि कृतः। एवञ्च अपादानत्वाद्यन्यतमत्वं कारकत्वमिति सिद्धम्।

कारकव्यवहारं प्रति कारकव्यवहारविषयतावच्छेदकस्य कारकत्वस्य ज्ञानं कारणमिति त्रिधा विचारितम्।

क्रियान्वयित्वं कारकत्वमिति दीक्षितादयः। कारकशब्देन तदर्थलाभात् क्रियाजनकत्वं कारकत्वमिति नागेशभट्टः। तत्तत्क्रियाकारकत्वनिरूपणे एव ग्रन्थकर्तुराग्रहः।

ततः कारकविशिष्टलक्षणानि प्रतिपादयति।

## अपादानम्।

एवं त्रिविधकारकलक्षणानि निरूप्य ग्रन्थकर्त्रा अपादानलक्षणं निरूपयति- यन्निष्ठविभागजनकत्वेन यन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेन च या क्रिया विवक्षिता तत्त्वंतत्क्रियापादानकारकत्वम्। तेन ग्रामादागच्छतोऽश्वात् पततीत्यादौ अश्वग्रामयोः नागमनपतनापादानत्वम्। वृक्षस्य पर्णं पततीत्यत्र न वृक्षस्य पतनापादनत्वापादनम्। यन्निष्ठेत्यादिविशेषणात् घटनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेन पतनविवक्षायामपि घटे नातिव्याप्तिः। तत् निष्ठेत्यादिविशेषणाच्च पर्णनिष्ठविभागजनकत्वेन पतनविवक्षायां पर्णे नातिव्याप्तिः। अत्र यत् पदं यत्पदाभिदेयपरं तेन वृक्षात् वृक्षे पततीत्यत्र सप्तम्यन्तवृक्षपदाभिधेयत्वविशिष्टस्य नापादानत्वम्।

वृक्षात् पर्णं पततीत्यत्र विभागः अन्योन्याभावप्रतियोगितावच्छेदकत्वञ्च

पञ्चम्यर्थः। तिङर्थश्चाश्रयः। तत्र पतनक्रियायां आधेयतयाश्रयः जनकत्व-स्वरूपसंबन्धाभ्यां विभागान्योन्याभावप्रतियोगिकावच्छेदकत्वे च प्रकारः। आश्रये चाभेदेन प्रथमान्तपदोपस्थापितं पर्णं विभागे एकदेशेप्यन्योन्याभावे च आधेयतया वृक्षव्युत्पत्तिबलादेकदेशान्वयस्यापि घटात्पर इत्यादाविव स्वीकारात्। तथा च वृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकवृक्षवृत्तिविभागजनकपर्णरूपाश्रयवृत्ति पतनमिति बोधः।

वृक्षाद्विभजत इत्यत्र। यदवधिकत्वेन प्रकृतविभजनक्रिया विवक्ष्यते। तत्तत्कृतविभजनक्रियापादानं अधित्वमवधित्वं वा पञ्चम्यर्थः। तथा च वृक्षावधिकविभाग आश्रयवृत्तिरिति बोधः। एतदुभयापादानस्य ग्राहकञ्च 'ध्रुवमपायेऽपादान' मिति पाणिनिसूत्रम्। अपायो विभागः तज्जनिता क्रिया च तस्मिन् साध्ये ध्रुवमवधिभूतमपादानसंज्ञं स्यात् इति तदर्थः इति।

वलाहकाद्विद्योदते विद्युदित्यत्र निस्सरणजन्यविद्योतनं विद्यतेरर्थः। निस्सरणं संयोगजनिता क्रिया व्युत्पत्तिविशेषादेकदेशेऽपि निस्सरणे पञ्चम्यर्थान्वयः। निस्सरणविद्योतने पृथगेवार्थौ। एकपदोपात्तयोरपि प्रत्ययाद्यर्थवत् परस्परमन्वयः। तथा च वलाहकवृत्तिविवाहजनकवलाहकनिष्ठान्योन्याभावप्रतियोगितावच्छेदकनिस्सरणजन्यविद्योतनं विद्युद्रूपाश्रयवृत्तीति बोधाकारः। कुतो भवानिति प्रश्ने पाटलीपुत्रादित्युत्तरे चागच्छतीत्यध्याहारेणान्वयः। तथा च किं शब्दस्य प्रश्नविषयार्थत्वात् प्रश्नविषयवृत्तीत्यागमनाश्रयो भवानिति प्रश्नवाक्ये पाटलीपुत्रवृत्तीत्याद्याश्रयान्त उत्तरवाक्ये बोधयति अनयोरप्यपादनयोः पूर्वसूत्रेणैव संग्रह इति बोध्यम्। अत्र अवधित्वं पञ्चम्यर्थः इति प्राचीनाः, पञ्चम्याः अपादानत्वशक्तिमानर्थ इति नवीनाः।

अधर्मात्जुगुप्सत इत्यत्रानिष्टसाधनताज्ञानप्रयोज्या निवृत्तिरनिष्टसाधनताज्ञानरूपा निन्द वा धात्वर्थः संबन्धत्वेन विशेषनिरूपेण वा भासते। अधर्माद्विरमतीत्यत्र विषयत्वं पञ्चम्याः धात्वर्थश्च कृतिध्वंसः समानकालत्वमभावश्च तध्वंसः सामानाधिकरण्येन कृतौ सा समानकालत्वे तच्चाभावे च स कृतिध्वंस आकाङ्क्षाविशेषबलात् प्रकारः। एकैव ध्वंसव्यक्तिः पूर्वोत्तरमाकाङ्क्षावशादेव भासते। तथा च अधर्मविषयकस्वसमानाधिकरण-स्वसमानकानकृतिध्वंस आश्रयवृत्तिरिति बोधः।

आत्मा विरमतीत्यादौ चाशुद्धसमवायेन सामानाधिकरण्यं व्युत्पत्तिबलेन भासत इति शरीरबोधकर्तृपदाभावेऽपि न क्षतिः।

प्रमाद्यतीत्यत्र पञ्चम्यर्थो विषयिता धात्वर्थ अधिकारविशिष्टसाधनताज्ञानाभावः। इष्टसाधनताज्ञाने च पञ्चम्यर्थान्वयः। अत्र जुगुप्सादीनां य विषयत्वेन विवक्षितत्वात्तेषामपादानं तत्संग्राहकञ्च 'जुगुप्साविरामप्रमादार्थानामुपंख्यानम्' इति वार्तिकम्। अत्र सौत्रध्रुवपदेन आकाङ्क्षावशेनान्वयादेतेषां ध्रुवं विषयित्वेन विवक्षितमपादानमिति वक्तव्यमिति तदर्थादिति।

चोरात् बिभेतीत्यत्र हेतुत्वं हेतुमत्वं वा पञ्चम्यर्थः। अयञ्च धात्वर्थः। तच्चानिष्टज्ञानं धनिकं चोरात् परित्रायत इत्यत्र उक्तन्तत् पञ्चम्यर्थः। धात्वर्थस्तु अनिष्टाभावानुकूलो व्यापारः। उभयत्र पञ्चम्यर्थो निषेधे सति तथा च चोरहेतुकानिष्टज्ञानं धनिकर्मकचोरहेतुकानिष्टाभावानुकूलो व्यापार आश्रयवृत्तिरिति बोधः।

'भीत्रर्थानां भयहेतुः' इति सूत्रम्। अत्र भयनिष्ठम्। तथा च भयत्राणार्थप्रतिपाद्यानिष्टहेतुत्वेन विवक्षितं यत्तत्तत्क्रियापादानमित्यर्थः।

कृष्णात् पराजयते, अध्ययनात् पराजयते इत्यदौ धात्वर्थो अनिष्टं पञ्चम्यर्थो जन्यत्वम्। एतदपादानबोधक 'पराजेरसोढ' इति सूत्रम्। अत्रासोढनिष्ठसाधनत्वेन विवक्षितः। तथा च राज्यर्थो (धात्वर्थो)ऽदृष्टसाधनत्वेन विवक्षितः। अतः क्रियापादानमित्यर्थः।

यवेभ्यो गां वारयतीत्यत्र संयोगो व्यापारो भावश्च धात्वर्थः। पञ्चमीद्वितीययोः वृत्तित्वमर्थः। तथा च यववृत्तिसंयोगः तज्जनकव्यापारस्य गोवृत्तिर्यो भावः तदनुकूलो व्यापार इति बोधः। अत्र 'वारणार्थाम् ईप्सित' मिति सूत्रम्। अत्र ईप्सितमाप्तुमिष्टम्, आप्तिश्च फलाश्रयत्वेन, फलञ्च सन्निधानात् प्रकृतधात्वर्थतावच्छेदकम्। तथा च वारणार्थकधात्वर्थतावच्छेदकफलाश्रयत्वेन इच्छाविषयस्तत्क्रियान्वयित्वेन विवक्षितः प्रकृतापादानमिति सूत्रार्थः।

उपाध्यायादन्तर्धत्ते शिष्य इत्यत्र प्रत्यक्षविरोधिदर्शनाभावेच्छापूर्वकः सन्निकर्षाभावः विशेष्यरूपेण प्रत्यक्षविरोधित्वेन वा

धात्वर्थः। पञ्चम्यर्थो वृत्तित्वम्। स च दर्शनाभावे अन्वेति। विरोधित्वाभावानुकूलत्वमुक्तरीत्या अभावादौ शक्तिः व्युत्पत्तिविशेषबलात् तमभिव्याहृतशिष्यादिविषयकदर्शनत्वावच्छिन्नप्रतियोगितया दर्शनाभावे प्रकारः। तथा च उपाध्यायवृत्तिस्पन्दनाभावेच्छापूर्वकस्वदर्शनविरोधिदर्शनसन्निकर्षाभावः शिष्यवृत्तिरिति बोधः। एतदपादानसंग्राहक 'मन्तर्द्धौ येनादर्शनमिच्छती'ति यत्कर्तृकस्वदर्शनाभावमन्दर्द्धि निमित्तमिच्छति सोपादानमिति तदर्थ इति।

पुत्रात् प्रमोदो जायत इत्यत्र जन्यत्वं पञ्चम्यर्थः। तच्च स्वाश्रयवृत्तित्वेन धात्वर्थे उत्पत्तौ अन्वेति न तु प्रमोदे साक्षात् संबन्धेन। तथा सति पुत्रस्यानपादानसंज्ञानापत्तेः। साहित्यक्रियान्वयित एवेति सिद्धान्तात्। अत्र 'जनिकर्तुः प्रकृति'रिति सूत्रमपादानसंग्राहकम्।

हिमवतो गङ्गा प्रवहतीत्यत्र आद्यो भारतवर्षीयं न तत् संसर्गस्थभूसंयोगो धात्वर्थः। विभागकालवृत्तित्वं पञ्चम्यर्थः। हिमवद्विभागकालवृत्तिः अद्य भारतवर्षीये तत्सर्गस्थसंयोगो गङ्गाश्रित इति बोधः। अत्र भूसंयोगस्योत्पत्तिविशिष्टस्य विभागकालवृत्तित्वं बोध्यम्। तेन हिमवदधोदेशविभागकालवृत्तित्वेऽप्याद्यसंयोगस्य न हिमवदधोदेशात् प्रवहतीति बोधः प्रयोगः। अत्र 'भुवः प्रभव' इत्यपादानसंग्राहकमिति।

बौद्धं विश्लेषमादाय 'पञ्चमी विभक्ते' इत्यादीनि सूत्राणि भाष्यकृता प्रत्याख्यातानि इत्यतः तद्विचारोऽत्र नास्ति।

एवं प्रकारेण ग्रन्थकर्त्रा अपादानस्य लक्षणद्वयं निरूप्य अपादानविधायकानि सूत्राणि तेषामुदाहरणानि च सुष्ठु प्रतिपादितानि।

## सम्प्रदानम्।

अपादानकारकनिरूपणानन्तरं सम्प्रदानकारकं विवेचयति ग्रन्थकारः - यत्क्रियासंबन्धजन्यफलभागित्वेनोद्देश्यं यत् तत्तत्क्रियासंप्रदानम्। यथा विप्राय धनं ददातीत्यत्र फलजनकत्वेनोद्देश्यत्वनिरूपिततत्त्वंचतुर्थ्यर्थः। तच्च स्वत्वनिवृत्तिस्वत्वजनकक्रियाविशेषरूपददात्यर्थतावच्छेदके खण्डशश्शक्तिपक्षे ददात्यर्थे वा स्वत्वेऽन्वेति। द्वितीयार्थो वृत्तित्वम्। तच्च स्वत्वतन्निवृत्योरन्वेति। फलविशेषश्च फलत्वेन विशेषरूपेण वा समभिव्याहारविशेषबलात् तात्पर्यतो वा भासते। स्वत्वनिवृत्तिश्च

समभिव्याहारबलात् कर्तुरेव। तथा च विप्रसुखजनकत्वेनोद्देश्य विप्रनिरूपितधनवृत्तिस्वतःस्वत्वनिवृत्तिजनकक्रियाश्रयवृत्तिरिति बोधः।

उद्देश्यत्वं चतुर्थ्यर्थः इति प्राचीनमतम्। तत्प्रभावोऽत्र दृश्यते। सम्प्रदानत्वशक्तिमान् चतुर्थ्यर्थः इति नव्याः।

वृक्षायोदकं सिञ्चतीत्यत्र द्रवद्रव्यक्रियानुकूलो व्यापारो धात्वर्थः। तत्र धात्वर्थतावच्छेदकक्रियायां फलजनकत्वेनोद्देशत्वं द्वितीयार्थौ वृत्तित्वं चान्वेतीत्याद्यूह्यम्। अत्र 'कर्मणा यमभिप्रैति स संप्रदान'मिति सूत्रम्। तदर्थश्च कर्मत्वस्य तत्तत्क्रियानिरूपितत्वात्। क्रियार्थस्य 'कारके' इत्यधिकारात् यत्क्रिया कर्मणा यमभिप्रैति बध्नाति तत्क्रियां प्रति स संप्रदानमेवेति। अत्र यमिति द्वितीयया फलभागित्वेनेप्सिततमत्वं संप्रदानस्य लभ्यत इति।

अत्र केचित् संप्रदानमिति महासंज्ञाकरणात् अर्थसंज्ञात्वात् सम्यक् प्रदीयते यस्मै तत्संप्रदानमिति रजकस्य वस्त्रं ददाति घ्नतः पृष्ठं ददातीत्यादौ न संप्रदानत्वम्। स्वत्वनिवर्तकपरस्वत्वजनकक्रियाविशेषस्य सम्यक् दानत्वादिरिति। तन्न तस्मै चपेटां ददातीति भाष्यप्रयोगात्। अन्वर्थत्वास्वीकारात्। एवञ्च रजकस्य वस्त्रं ददादीत्यादयः प्रयोगाः शेषत्वविवक्षया बोध्याः। संप्रदानविवक्षायान्तु रजकाय वस्त्रं ददातीत्यादयोपि बोधाः।

पत्ये शेते इत्यत्र धात्वर्थे फले जनकत्वेनोद्देश्यत्वरूपः चतुर्थ्यर्थः अन्वेति। तत्संग्राहकं 'क्रियाग्रहणं कर्तव्य'मिति वार्तिकम्। क्रिययाभिप्रेयमाणं संप्रदानमिति तदर्थः। यत्क्रियाजन्यफलभागित्वेन यदुद्देश्यं तत्क्रियासंप्रदानमिति फलितम्। एवं ग्रन्थकर्तृमते क्रियया उद्दिष्टस्य सूत्रेणाप्राप्त्या तदर्थं वार्तिकमावश्यकम्। किन्तु क्रियापि कृत्रिमं कर्म इत्युक्त्वा भाष्यकारः पत्ये शेते इत्यादौ कर्मणा यमभिप्रैतीति सूत्रेणैव सम्प्रदानत्वं साधितवान्। तदेव हरिणापि संदर्शनं प्रार्थनायञ्चेत्यादिना स्पष्टीकृतम्। तत्प्रभावोऽत्र न दृश्यते।

देवदत्ताय रोचते मोदक इत्यत्र वृत्तित्वं चतुर्थ्यर्थः। अभिलाषो धात्वर्थः। विषयतया आश्रय आख्यातार्थः। तथा च मोदकविषयकोऽभिलाषो देवदत्तवृत्तिरिति बोधः। तत्संग्राहकञ्च 'रुच्यर्थानां प्रीयमाण ' इति सूत्रम्। देवदत्ताय श्लाघतेऽनुतिष्ठते शपते इति। आद्ययोः क्रिययोर्योगे कर्मत्वमन्त्ययोः संबन्धि चतुर्थ्यर्थः। तथा च

देवदत्तं स्तौतीत्यर्थः। अत्र श्लाघादिना ज्ञापयितुमिष्यमाणत्वे वा सत्यैव देवदत्तादीनां संप्रदानत्वम्। एतत्संग्राहकं 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमान' इति सूत्रम्।

देवदत्ताय शतन्धारयत इत्यत्र संबन्धित्वं चतुर्थ्यर्थः। तच्च धारणेऽन्वेति। संबन्धश्च देवदत्तीयद्रव्यघटितः। 'धारेरुत्तमर्ण 'इत्यनेन अत्र संप्रदानत्वम्।

पुष्पेभ्यः स्पृहयतीत्यत्र कर्मत्वं संबन्धत्वेन विषयत्वरूपसंबन्धश्चतुर्थ्यर्थः। स च यथा तात्पर्यमेकैकशः समं समुदितो वा शाब्दबोधे भासते। एतत्संग्राहकं 'स्पृहेरीप्सित' इति सूत्रम्।

शत्रवे क्रुध्यति द्रुह्यति ईर्ष्यति असूयतीत्यत्र पूर्वयोः क्रिययोः अकर्मकत्वात् तदन्वये संबन्धत्वेन संबन्धविषयचतुर्थ्यर्थः। अत्र 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इति संप्रदानत्वम्।

कृष्णाय राध्यति ईर्ष्यति इत्यत्र संबन्धत्वेन संबन्धविशेषणश्चतुर्थ्यर्थः। शुभाशुभपर्यालोचनं धात्वर्थः। कृष्णसंबन्धिशुभाशुभालोचनं आश्रयवृत्तिरित्यर्थः। 'राधीक्ष्योर्यस्य विप्रश्न' इति संप्रदानसंज्ञा।

विप्राय गां प्रतिशृणोतीत्यत्र अन्यदीयप्रवर्तनापूर्वकोऽभ्युपगमो धात्वर्थः। चतुर्थ्यर्थो वृत्तित्वम्। एकदेशप्रवर्तनायामन्वेति। तथा च मह्यं गां देहीति विप्रप्रवर्तनापूर्वको गवाभ्युपगम इत्यर्थः। तत्संग्राहकं 'प्रत्याभ्यां श्रुवः पूर्वस्य कर्ते 'ति सूत्रम्।

होत्रेऽनुगृह्णातीत्यत्र शंसनपूर्वकं प्रोत्साहनं धात्वर्थः। संबन्धत्वेन संबन्धः चतुर्थ्यर्थः। स च वृत्तित्वरूपः। समभिव्याहारविशेषबलात् प्रोत्साहे शंसने चान्वेति। तथा च हेतुवृत्तिप्रोत्साहनानुकूलो व्यापार इत्यर्थः। 'अनुप्रतिगृह्णश्चे'त्येतत्संग्राहकं सूत्रम्।

शताय परिक्रीणातीत्यत्र दानानन्तर्यं चतुर्थ्यर्थः। न नियतकालस्वीकरणं धात्वर्थः। अत्र लक्षणे तृतीयान्तपदानभिधेयत्वमपि प्रवेश्यम्। तेन शतेन परिक्रीणातीत्यत्र शतस्य न संप्रदानत्वम्। एतत् संग्रहणं 'परिक्रयणे संप्रदानमन्यतरस्या'मिति सूत्रम्। अत्रापि प्रतिगृहान्तसंप्रदानलक्षणे यथोदाहरणं धातुविशेषाः प्रवेशनीयाः इति ध्येयम्। अत्रापि

उक्तसंप्रदानान्यतमत्वादिसकलसंप्रदानसाधारणं बोध्यम्।

ईप्सिततम-ईप्सितशब्दयोरर्थभेदः नागेशग्रन्थेषु सुष्ठु विचारितः। तमब्ग्रहणलभ्यः प्रकर्ष उपपादितः। तद्विचारोऽत्र न प्रवृत्तः।

एवं सम्प्रदानकारकस्य लक्षणं तत्रस्थमतभेदानि च सूपन्निरूप्य तद्विधायकानि सूत्राणि सोदाहरणं प्रत्यपीपदत्।

## करणम्।

सम्प्रदानोत्तरं करणकारकं निरूपयति ग्रन्थकारः- यद्व्यापारव्यवहितोत्तरं यत्तत्क्रियानिष्पत्तिर्विवक्ष्यते तत्तत्क्रियाकरणम्। काष्ठेन पचतीत्यत्र व्यापारानन्तर्यं तृतीयार्थः। तथा च काष्ठव्यापाराव्यवहितोत्तरः पाकः इत्यर्थः। एतत्संग्राहकं 'साधकतमं करण'मिति सूत्रम्।

एवमेकेनैव लक्षणेनोदाहरणेन च करणसंज्ञा निरूपिता ग्रन्थकृता।

## अधिकरणम्।

करणनिरूपणात् परं सलक्षणोदाहरणम् अधिकरणकारकं निरूपयति ग्रन्थकर्ता।

कर्तृकर्मान्यतरघटितपरम्परया यत्क्रियाश्रयत्वेन यो विवक्षितः स तत्क्रियाधिकरणम्। भूतले घटोस्तीत्यत्र सप्तम्याश्रयद्वारकमाधेयत्वं धातुना कालसंबन्धः। वर्तमानत्वमाश्रयश्चाख्यातेन प्रतीयते। तथा च घटरूपाश्रयवृत्ति वर्तमानकालसंबन्धः स्वाश्रयद्वारा भूतलाधेयत्ववानिति बोधः।

गङ्गायां घोष इत्यत्रापि आश्रयघटितपरम्परया आधेयत्वं सप्तम्यर्थः। ईयान् परं विशेषः। भूतले घट इत्यादावाश्रयस्याधिकरणे साक्षात्संबन्धेन परंपरासंबन्धघटकत्वम्। इह तु गङ्गासमीपतीरवृत्तित्वरूपपरम्परया संबन्धेनेति। गङ्गासमीपतीरवृत्तित्वप्रकारकबोधतात्पर्ये तु सप्तम्या समीपतीरवृत्तित्वे गङ्गापदस्य वा स्वसमीपतीरे लक्षणा।

तिलेषु तैलं घटे ज्ञानमित्यस्याश्रयस्य व्यापकत्वेन विषयतया च अधिकरणसंबन्धेन परम्परासंबन्धघटकत्वं एतत्सर्वाधिकरणसंग्रहण'माधारोऽधिकरण' मिति सूत्रम्। इदञ्च त्रिविधम्। वैषयिकमभिव्यापकमौपश्लेषिकञ्चेति। तत्र वैषयिकं घटे ज्ञानमिति। अभिव्यापकं

तिलेषु तैलमिति। आभ्यामतिरिक्तं भूतलेऽस्त्यादावौपश्लेषिकमिति।

एवं सभेदम् अधिकरणकारकं ग्रन्थकृता सोदाहरणं न्यरूपि।

## कर्म।

अधिकरणोत्तरं निरूपयति ग्रन्थकर्ता कर्मकारकम्। परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वमिति नैय्यायिकोक्तं लक्षणम्। तन्मार्गमनुसरति ग्रन्थकर्ता।

परसमवेतं यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि यत् तत्तत्क्रिया कर्म। ग्रामं गच्छतीत्यत्र द्वितीयार्थौ वृत्तित्वम्। भेदश्च संयोगजनिता क्रिया धात्वर्थः। तत्र धात्वर्थतावच्छेदकसंयोगे वृत्तित्वं क्रियायां सामानाधिकरण्येन भेदे प्रतियोगितया प्रकृत्यर्थोऽन्वेति। तथा च ग्रामवृत्तिसंयोगजनिका ग्रामभेदसामानाधिकरणा क्रिया एकाश्रयवृत्तिरिति बोधः। गम्यते ग्राम इत्यत्र आख्यातार्थौ भेद आश्रयश्च। तत्र फलांशे आश्रयः क्रियायाञ्चोक्तसंबन्धेन भेदः अन्वेति। भेदे च प्रतियोगितया फलाश्रयः। आश्रये चाभेदेन ग्रामोऽन्वेति। तथा च ग्रामरूपाश्रयवृत्तिसंयोगजनिका तद्भिन्नसमवेता क्रियेति बोधः।

पाचयति देवदत्तेन यज्ञदत्त इत्यत्रापि देवदत्ते लक्षणस्यातिव्याप्तिरिति वाच्यम्। क्रियाभेदे कर्मत्वस्य भेदके णिजन्तपाचयतीत्यादिभिन्नक्रियाघटितलक्षणस्यैव करणात्। अत एव 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रम्। अन्येषां णिजन्तानां ण्यन्तावस्थक्रियाकर्तुः कर्मता निवर्ततया नियामकमिति सिद्धान्तः। हारयति-कारयत्योस्तु तृतीयान्तानभिधेयत्वमपि देयम्। तेन हारयति कारयति भृत्येन कटमिति नातिव्याप्तिः। न च एतद्भिनैव क्रियाकर्मलक्षणे उपादीयतां किमेतत् विशेषणदानेनेति वाच्यम्। हारयति कारयति भृत्यं कटमित्यत्र भृत्यस्य कर्मताया अपीष्टत्वात्। अत एव 'हृक्रोरन्यतरस्या'मिति सूत्रेण वैकल्पिकं कर्मत्वमिति।

घटं करोति जानातीत्यादौ उत्पत्यनुकूलो व्यापारः विषयतापादकज्ञानादि च धात्वर्थ इति। उत्पत्तिविषयतापत्तिश्च फलमादाय घटस्य कर्ममित्याद्यन्यत्राप्यूह्यम्। अत्र क्रियाद्वयं प्रति क्रमेण गतो निर्वर्त्यं प्राप्यञ्च कर्म। काष्ठं भस्म करोतीत्यत्र काष्ठमिति कर्म। तत्र आरम्भकसंयोगनाशो अनुकूलोत्पत्यनुकूलव्यापारश्च धात्वर्थः। आरम्भकसंयोगनाशरूपफलान्वयित्वात् काष्ठस्य उत्पत्तिरूपफलान्वयित्वाच्च

भस्मनः कर्मत्वम्। अत्र 'कर्तुरीप्सिततमं कर्मे'ति सूत्रं कर्मताबोधकम्। तत्र कर्तुः क्रियाश्रयस्याप्तुमित्यत्र करणाकाङ्क्षायां यया क्रियया कर्ता तया आप्तुमिष्टतममिति।

द्वेष्योदासनकर्मणोः संग्रहाय 'तथा युक्तं चानीप्सित'मिति सूत्रम्। दुहियाचिरुधिपृच्छिप्रक्षिचिञ्ब्रूञ्शासनिरववहिभ्रञ्जिक्लमन्थमुदण्डतानि समानार्थधात्वर्थक्रियासंबन्धत्वेन विवक्षितम्। यत्तत्क्रियासंबन्धि तत्क्रिया कर्म। यथा गां दोग्धि पय इत्यादि। एतत्संग्राहकञ्च 'अकथितञ्चे'ति सूत्रम्।

कर्तुमभिक्रुध्यति अभिद्रुह्यतीत्यत्र द्वितीयार्थः संबन्धः। अत्र 'क्रुधद्रुहोरुपसृष्टयोः कर्मे'ति सूत्रं कर्मत्वबोधकत्वम्। अधिशेते अधितिष्ठति अध्यास्ते अधिनिविशते उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः। अत्र द्वितीयार्थश्चाधेयत्वम्। कर्तृघटितपरम्परया क्रियायामन्वेति। एतत्संग्राहकाणि च

'अधिशीङ्स्थासां कर्म' 'अभिनिविशश्च' 'उपान्वध्याङ्वसः' इति सूत्राणि। अत्रोपवसति न भोजननिवृत्त्यर्थः। तेन ग्रामे उपवसतीत्यत्र न कर्मत्वम्। उपोष्य रजनीमित्यत्र 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीया न कर्मणीति।

अक्षान् दीव्यतीत्यत्र व्यापारानन्तर्यं द्वितीयार्थः। 'दिवः कर्म चे'त्यनेनात्र कर्मत्वम्। न च प्रागुक्तकरणत्वस्यातिव्याप्तिः। लक्ष्यत्वात् एकस्यैव दीव्यति क्रियाकर्मकरणत्वे बाधकाभावात्। उक्तसकलकर्मान्यतमत्वादिसकलकर्मसाधारणं बोध्यम्। फलेभ्यो यातीत्यत्र असमभिव्याहृततुमुन्णमुलन्तधातुप्रतिपाद्याहरणक्रियानिरूपितकर्मकत्वं चतुर्थ्यर्थः। तथा च फलान्याहर्तुं यातीत्यर्थः। न त्वां तृणाय मन्ये इत्यत्र कर्मत्वं चतुर्थ्यर्थः। एतच्चतुर्थी समभिव्याहारे प्रकृते स्वार्थसदृशो निरूढलक्षणा। तथा च त्वत्कर्मकं ज्ञानं तृणसदृशकर्माभिन्नमित्यर्थः। अत्र त्वत्कर्मकत्वविशिष्टे ज्ञाने तृणसदृशकर्मकभेदः। त्वयि तृणसदृशभेदे पर्यवसति। तत्सदृशभेदश्चात्यन्तापकर्षप्रयुक्त एव। मन्येति कर्म चतुर्थीसमभिव्याहारे बुध्यत इति नोत्कृष्टेन त्वां तृणाय मन्यत इति प्रयोगः।

पित्रा सञ्जानीत इत्यत्र कर्मत्वं तृतीयार्थः। तण्डुलस्य पाक इत्यत्र षष्ठ्यर्थ इति।

इत्येवं कर्मणः विभागपुरःसरं लक्षणोदाहरणानि प्रतिपादितानि ग्रन्तकृता।

## कर्ता।

अन्तिमे च कर्तृकारकं ग्रन्थेऽस्मिन् निरूपितं वर्तते। यद्धात्वर्थाश्रयत्वेन यो विवक्षितः स तत्कर्ता। धात्वर्थत्वं च धातुजन्यबोधमुख्यविशेष्यत्वम्। तच्च धातुजन्यबोधविशेष्यतानिरूपितप्रकारतानाश्रयत्वे सति धातुजन्यबोधविषयत्वम्। चैत्रः तिष्ठति तत्र धात्वर्थे तिङर्थ आश्रयः वृत्तित्वसंबन्धेनान्वेति। तथा च चैत्ररूपाश्रयवृत्तिस्थानमिति बोधः। चैत्रेण स्थीयत इत्यत्र धात्वर्थे तृतीयार्थ आश्रयः। उक्तसंबन्धो प्रकृत्यर्थतृतीयार्थेऽन्वेतीति पूर्ववदेव बोध इति।

एवं रीत्या सलक्षणं सोदाहरणञ्च कर्तृकारकं निरूप्य ग्रन्थमिमं परिसमापयति आचार्यः शेषचक्रपाणिः।

एवमस्य ग्रन्थस्य विषयस्वरूपम्। ग्रन्थे चास्मिन् नैय्यायिकी शैली संलक्ष्यते। अत्र पूर्वपक्षे नैय्यायियिकाः केचन वैय्याकरणाश्च वर्तन्ते।सर्वत्र प्रायशः कारकनिरूपणे न्यायमतप्रभावो दृश्यते। भाष्यवचनानि, हरिकारिकाः वा प्रायशः प्रमाणत्वेन नोल्लिखिताः। केवलं प्राचीनपन्था एव दृश्यते।ग्रन्थेऽस्मिन् प्राचीनमतानुसारं लक्षणानि कृतानि वर्तन्ते। अतः ग्रन्थोऽयं प्राचीनव्याकरणपरम्परायामन्तर्भावयितुं शक्यते। तदुत्तरं नागेशादिभिः कारकप्रकरणं बहुधा विचारितम्।

## ग्रन्थकर्तृपरिचयः

ग्रन्थस्यास्य कर्तुः विषये पुष्पिकायामुपलभ्यते विवरणं किञ्चित्। उभयत्र मातृकयोः"इति शेषचक्रपाणिपण्डितविरचितं कारकतत्त्वंसमाप्तम्।"इति पुष्पिका। अनेन च ज्ञायते अस्य ग्रन्थस्य कर्ता शेषचक्रपाणिः इति। मलयालमातृकायामेवं श्लोकः कश्चन अवलोक्यते-

> चोलदेशलिपिन्दृष्ट्वा लिखितं केरलाक्षरैः।
> सुधिया शेषपूर्वेण सुकृतं चक्रपाणिना।।

इतः अपि ज्ञायते इदं शेषचक्रपाणिविरचितमिति।

अस्य च विषये बहूनि प्रमाणानि नोपलभ्यते। किन्तु लब्धैश्च प्रमाणैः विद्वद्भिः एवं निर्णयः कृतः यदसौ वाराणसेयवास्तव्यः, तत्रस्थ शेषपरम्परायामसावन्यतमः इति। ग्रन्थारम्भगुरुवन्दनादस्य गुरुः शेषवंशीयः विश्वेश्वरः इति ज्ञायते। तत्र च-

विरोधिनां तिरोधानक्षमो यस्य गिरां गणः।
विश्वेश्वरगुरुं शेषवंशोत्तंसमहं वन्दे ।। इति।

अत्रोक्तः विश्वेश्वरश्च भट्टोजीदीक्षितस्य गुरोः शेषकृष्णस्य पुत्रः।

युधिष्ठिरमीमांसकः चक्रपाणिदत्तः इत्युल्लिखति। अस्य परम्परा विषये "Encyclopedia of Indain Philosophy, Vol. 5 Grammer" इति ग्रन्थे एवमुल्लेखः दृश्यते- असावाचार्यः शेषकृष्णस्य पौत्रः विश्वेश्वरस्य पुत्रः शिष्यश्च। अस्य भ्राता शेषपुरुषोत्तमः, अस्य पुत्रः शेषगोपिनाथः इति।

## कालः

अस्य कालः प्रायः 1550-1625 मध्ये भवेदिति विदुषां मतम्। तत्र प्रमाणञ्च असौ शेषविश्वेश्वरस्य शिष्यः इति। विश्वेश्वरश्च प्रायः दीक्षितसमकालीनः। पुनश्च अनेन भट्टोजीदीक्षितस्य प्रौढमनोरमां खण्डयन् खण्डनमिति ग्रन्थः लिखितः। अतः अस्य कालः दीक्षितकालसमीपे भवेदिति एवं निर्णयः कृतः।

## इतरकृतयः

कारकतत्वनामकग्रन्थातिरिक्ततया द्वौ ग्रन्थौ अनेन लिखितौ वर्तेते। "परमतखण्डनम्" अथवा "खण्डनम्","प्रक्रियाप्रदीपः" इति च।

1, **परमतखण्डनम्**- अस्य नामान्तरमस्ति खण्डनमिति। अयं ग्रन्थः भट्टोजीदीक्षितस्य प्रौढमनोरमां खण्डयन् अनेन लिखितः। अस्य उपलब्धानामंशानां प्रकाशनं काशीतः खण्डशः कृतः वर्तते। सम्पादकः वि.पि. द्विवेदी महाशयाः। नायं सम्पूर्णतया उपलब्धः।

2, **प्रक्रियाप्रदीपः**- द्वितीयः ग्रन्थः भवति अयम्। अयञ्च ग्रन्थः रामचन्द्रस्य प्रक्रियाकौमुद्याः व्याख्यानमस्ति। सम्प्रति अयं ग्रन्थः नोपलभ्यते। किन्तु स्वरचिते खण्डने द्वित्रि स्थानेषु अस्य विषये उल्लेखः कृतः वर्तते। यथा- "तस्मादुत्तरत्रानुवृत्त्यर्थं तदित्यस्मत्कृतप्रदीपोक्त एव निष्कर्षः" । तथा- "अयन्तु प्रक्रियाप्रदीपादवधेयम्"।

## सम्पादनप्रक्रिया

सम्पादनप्रक्रियायां प्रप्रथमः अंशः मातृकापरिशीलनमस्ति। मातृकाः परिशील्य तेषां परम्परादिकं निर्णीय ततः आधारमातृकां स्वीकृत्य तदाधारेण

अन्यानि परिशील्य युक्त्या विविच्य पाठनिर्णयः क्रियते सम्पादकेन। अतः प्रथमस्यांशस्य अत्र प्रथममुपस्थापनं क्रियते।

# मातृकाविवरणम्

मया अत्र ग्रन्थसम्पादनाय मातृकाद्वयं स्वीकृतमस्ति। तत्र एका मलयाललिप्यां विद्यमाना तिरुवनन्तपुरीयमातृकागारात् स्वीकृता, द्वितीया देवनागरिलिप्यां विद्यमाना मद्रपुरीयसर्वकारीयमातृकागारात् स्वीकृता च। तयोः मातृकयोः स्वरूपादिविवरणमत्र दीयते।

## मलयालं मातृका-

इयं मातृका तिरुवनन्तपुरस्थ मातृकागारे वर्तते। अस्य ग्रन्थालयीयसंख्या 1803। इयं मातृका मलयालिप्यां लिखितं वर्तते। इयञ्च तालपत्रमातृका। प्रत्येकस्य पत्रस्य विस्तृतिः 7.7"/2" वर्तते। प्रत्येकस्मिन् पत्रे अष्टौ पङ्क्तयः विद्यते। प्रतिपङ्क्ति द्वात्रिंशदक्षराणि वर्तन्ते। अत्र मातृकायां त्रयत्रिंशत् पत्राणि वर्तन्ते। एवमाहत्य 528 ग्रन्थाः अस्यां मातृकायां वर्तन्ते।

## आरम्भः-

हरिः श्री गणपतये नमः। अविघ्नमस्तु।

साधयति नेहमानन्देहविहीनञ्च येह जगदीशं।
सा मयि सेवकभावं प्राप्ते वाग्देवता दयताम्।।

विरोधिनां तिरोधानक्षमो यस्य गिरां गणः।
विश्वेश्वरगुरुं शेषवंशोत्तंसमहं वन्दे।।

कारकतत्त्वं चिन्त्यते- " इति

## अन्त्यः-

चैत्रेण स्थीयत इत्यत्र धात्वर्थे तृतीयार्थ आश्रयः। उक्तसंबन्धो प्रकृत्यर्थतृतीयार्थेऽन्वेतीति पूर्ववदेव बोध इति। भवतश्च पदमित्यादौ षष्ठ्या अप्याश्रयोऽर्थः। बोधश्चोक्तरीत्यैवेति ध्येयम्।

## पुष्पिका-

इति शेषचक्रपाणिपण्डितविरचितं कारकतत्त्वंसमाप्तम्।।

## पुष्पिकानन्तरभागः-

"श्री गुरुभ्यो नमः। श्रीनारायण प्रीयताम्।
चोलदेशलिपिं दृष्ट्वा लिखितं केरलाक्षरैः।

सुधिया शेषपूर्वेण सुकृतं चक्रपाणिना।। कारकतत्वमिति शेषः।

कोलम्बवर्षे षष्ठ्यर्थहीनदन्तकृते समे।
सिंहमासेऽलिखदिदं कैलासश्शङ्करोंयः।। " इति

अत्र मातृकायाः पुष्पिकानन्तरभागपरिशीलनेन ग्रन्थस्य लेखनविषये सर्वमपि ज्ञानं लभ्यते। अस्य लेखकः शङ्करः कैलासपुर्वकः। तद्धि तस्य नाम अपि भवितुमर्हति अथवा गृहनाम वा स्यात्।

अस्य ग्रन्थस्य लेखनं षष्ठ्यर्थहीनदन्तकृते समे कोलम्बवर्षेऽभवत्। अत्र षष्ठ्यर्थ इत्यनेन 64 इति स्वीक्रियते। एवं दन्तकृते इत्यनेन 32 इत्यस्य वर्गः स्वीक्रियते। तद्धि 1024 इति। तत्र षष्ठ्यर्थहीनन्नाम 1024 तः 64 न्यूनीकृते इति। तदा 960। तेन 960तमे कोलम्बवर्षे अस्य ग्रन्थस्य प्रणयनमभवत् इति ज्ञायते। तद्धि क्रिस्तब्दे 1784तमं वर्षं भवति। तस्मिन् वत्सरे सिंहमासे अस्य लेखनमभवत् । एवमस्याः मातृकायाः आयुः प्रायः 223 वर्षाणि इत्यनुमीयते।

अस्याः आदर्शमातृका काचित् ग्रन्थलिपिमातृका अस्ति इति तत्र श्लोके उक्तमस्ति। तां मातृकां दृष्ट्वा लेखकेन मलयाललिप्यां लिप्यन्तरीकरणं कृतमस्ति।

मातृकायामस्यामुपलभ्यमाना लिपिः प्राचीनमलयाललिपिः। इयञ्च लिपिः प्रारम्भकाले प्रयुक्ता आसीत्। इदानीन्तनलिप्याः महानत्र भेदो नास्ति, तथापि केषुचिदक्षरेषु भेदः अवलोक्यते।

एषा मातृका दोषभूयिष्ठा अस्ति। बहुषु स्थलेषु वर्णानामावर्तनं दृश्यते। तथैव बहुषु स्थलेषु वर्णयोजनञ्च दृश्यते। प्रायः ग्रन्थलिप्यां भ्रान्तः सन् एवं कृतवान् स्यात्। तथैव प्रथमपत्रे एव द्वितीयपत्रे विद्यमानं "लक्षणे क्रियाविशेषप्रवेशात् पश्यतो राज्ञः" इत्यस्य आवर्तनं दृश्यते।

अस्यां मातृकायां दोषसंशोधनं कृतमिति ज्ञायते। यत्र यत्र दुष्टमस्ति तत्र तत्र

रेखया ज्ञापितमस्ति। अपपाठान् आवर्तितपाठाञ्च कोष्ठके संस्थाप्य ज्ञापयति। तथैव यत्र पत्रं त्रुटितं लेखनायोग्यञ्च वर्तते तत्र रिक्तं त्यक्तमस्ति। प्रायः नवम-एकादश-द्वादश-त्रयोदश-सप्तदश-अष्टादश -ऊनविंशति-विंशति पत्राणि एवंरीत्या तत्र तत्र रिक्तस्थानयुतानि वर्तन्ते।

अस्यां मातृकायां मातृकापत्रसंख्यादानाय पुरातनसंख्यालेखनक्रमः उपयुक्ता दृश्यते। एषः क्रमः कालेऽस्मिन् नोपलभ्यते। अस्य क्रमस्य नाम भवति "नन्नन्यष्क्रादि " इति। अस्मिन्क्रमे संख्याः अक्षरैः सूच्यन्ते। अयं क्रमः पुस्तकेषु संख्यासंसूचनाय उपयुक्ता आसीत्। अनेनापि इयं मातृका पुरातना इति ज्ञायते।

## देवनागरी मातृका-

इयञ्च मातृका मद्रपुरीयसर्वकारीयप्राच्यमातृकासमग्राहालयात् प्राप्ता अस्ति। अस्य संख्या 3334 इति। इयं मातृका कर्गजपत्रमातृका देवनागरीलिप्यां लिखिता। अस्यां षोडश पुटानि वर्तन्ते। प्रत्येकस्मिन् पुटे प्रायः विंशति पङ्क्तयः वर्तन्ते। प्रत्येकस्यां च पङ्क्तौ द्वाविंशत्यक्षराणि वर्तन्ते। आहत्य च412.16 ग्रन्थाः ।

## आरम्भः-

।। श्री ।।

।। कारकतत्वम् ।।

साधयति नेहमानन्देहविहीनञ्च येह जगदीशं।
सा मयि सेवकभावं प्राप्ते वाग्देवता दयताम्।।

विरोधिनां तिरोधानक्षमो यस्य गिरां गणः।
विश्वेश्वरगुरुं शेषवंशोत्तंसमहं वन्दे।।

कारकतत्त्वं चिन्त्यते- " इति

## अन्त्यः-

चैत्रेण स्थियत इत्यत्र धात्वर्थे तृतीयार्थ आश्रयः। उक्तसंबन्धो प्रकृत्यर्थतृतीयार्थेऽन्वेतीति पूर्ववदेव बोध इति। भवतश्च पदमित्यादौ षष्ठ्या अप्याश्रयोऽर्थः। बोधश्चोक्तरीत्यैवेति ध्येयम्।

## पुष्पिका-

इति शेषचक्रपाणिपण्डितविरचितं कारकतत्त्वंसमाप्तम्।।

अस्याः मातृकायाः अन्तिमे प्रदत्तया आङ्गलसूचनया इदं ज्ञायते यत् इयं मातृका कस्याश्चित् मलयालमातृकायाः लिप्यन्त्यरिता मातृका इति।

अस्याः लेखन कालः 1920 क्रिस्तब्दः अस्ति। तस्मिन् वत्सरे नवंबरमासे चतुर्थे दिनाङ्क अस्याः लेखनं समाप्तमासीत्। तत्रोल्लिखितया सूचनया इदमपि ज्ञायते यत् अस्याः आदर्शमातृकायाः अधिपः कश्चन कूटल्लिमन नारायणन्-नम्पूतिरिप्पाट् आसीदिति। असावासीत् मलबारप्रान्तीयः।

लेखनानन्तरं इयं आदर्शमातृकया सह तोलयित्वा संशोधिता आसीत्। तच्च कार्यं 2-1-1921 तमे दिनाङ्के समाप्तमासीत्।

अस्याः मातृकायाः वामपार्श्वे प्रत्येकस्य तालपत्रस्य संख्या प्रदत्ता अस्ति। अस्यां च प्रघट्टविभागः तथा पंङ्क्तिविभागः च कृता वर्तते। किन्तु नायं विभागः शुद्धः। लेखकस्य अक्षराणि सुन्दराणि वर्तन्ते।

## मातृकावंशावली-

मातृकाणां परिशीलनानन्तरं सम्पादकेन तासां मातृकाणां काचित् वंशावली निर्मेया। तत्र च ग्रन्थकर्तृपाठः तदनु आदर्शपाठः ततश्च पाठभेदाद्यनुसारं विविधाः शाखाः च निर्मेया। तत्र च शाखासु अवान्तरभेदाश्च कदाचिदुपलभ्येत। वंशावली निर्माणाय एते अंशाः परिशीलनीयाः-

1. पाठभेदसाम्यम्
2. दोषसाम्यम्
3. अधिकः पाठः
4. अपपाठः इत्यादि ।

एवं वंशावली निर्माणेन पाठनिर्णयः सुलभः भवति। यस्यां परम्परायां दोषाः पाठभेदाश्च न्यूनादृश्यते सा परम्परा मूलपरम्परा इति निर्णेतुं शक्यते।

अत्र विद्यमानमातृके द्वे अपि प्रायः एकमूलके भवतः। मलयालमातृकायाम् (मल.) आदर्शमातृकायाः साक्षादुल्लेखः दृश्यते। सा च काचित् ग्रन्थमातृका।

मद्रपुरीयमातृकायामपि (देव.) आदर्शमातृकायाः उल्लेखः वर्तते। सा काचित् मलयालमातृका। किन्तु सा मलयालमातृका अत्र विद्यमानमातृकायाः(मल.) भिन्ना एव। यतः मद्रपुरीमातृकायां विद्यमानतालपत्रसंख्या 30 पर्यन्तमेव अस्ति। मल. मध्ये 33 पत्राणि सन्ति। किन्तु उभयत्र दोषाः प्रायः समानाः। तथैव भ्रान्तिस्थानान्यपि समानानि। अतः एवमनुमीयते यत् द्वे अपि मलयालमातृके एकमूलके इति। तत्रानुपलभ्यमानायाः देव. प्रतिलिपीकृतम् इति च। तथा सति एवं वंशवृक्षः मातृकानाम्- आदर्शपाठात् एका अनुपलब्धा शाखा अपरा च ग्रन्थमातृकाशाखा। ग्रन्थमातृकायाः द्वे मलयालमातृके। तत्र एका लुप्ता, यस्याः मद्रपुरिया देवनागरीमातृका प्रतिकृता अपरा तिरुवनन्तपुरस्था इति।

## आदर्शमातृका-

ग्रन्थस्य सम्पादनाय प्रथमतः कश्चन पाठः आश्रयणीयः। सः पाठः यस्यां मातृकायां वर्तते सा मातृका आदर्शमातृका इति। आदर्शमातृकानिर्णये मुख्यतया त्रयः अंशाः परिशील्यन्ते। ते च-

1.प्राचीनता

2.शुद्धता

3.पूर्णता इति।

एषां परिशीलनेन आदर्शमातृकां निर्णीय तदीयपाठेन अन्येषां पाठानां तोलनेन समीचीनतरस्य पाठस्य निर्णयः क्रियते।

अत्र मातृकयोः उभावपि पूर्णौ। पुनश्च मलयालमातृका (मल.) पुरातना। तथापि सा दोषभूयिष्ठा। अतः दोषन्यूनत्वेन मद्रपुरीमातृका(देव.) आदर्शमातृकात्वेन स्वीकृता अस्ति।

यत्र यत्र पाठभेदः वर्तते तत्र तत्र समीचीनः पाठः मुलपाठत्वेन उपरि दत्वा पाठान्तरं पादटिप्पन्यां प्रदत्तमस्ति। यदि उभावपि पाठौ अशुद्धौ तर्हि युक्तं पाठं परिकल्प्य दुष्टौ पाठौ पादटिप्पन्यां समायोजितमस्ति। लेखनदोषाः वर्णदोषाश्च ये स्पष्टतया ज्ञायते तेषां संशोधनं कृत्वा पाठः स्थापितः। तेषां पृथगुल्लेखः नात्र कृतः वर्तते। पाठकानां पाठसौकर्यार्थं ग्रन्थस्य विषयविभागं कृत्वा शीर्षकानि दत्तानि

यानि मातृकापाठेषु न वर्तन्ते।

एवमत्र मया शेषचक्रपाणिपण्डितविरचितस्य कारकतत्वनामकस्य ग्रन्थस्य पाठसम्पादनाय कश्चन उद्यमः कृतः। तत्साफल्ये विद्वांसः प्रमाणम्।

# कारकतत्त्वम्

श्री

# कारकतत्त्वम्

[१]साधयति नेहमानन्देहविहीनञ्च येह जगदीशं।
सा मयि सेवकभावं प्राप्ते वाग्देवता दयताम्।।

विरोधिनां तिरोधानक्षमो यस्य गिरां गणः।
विश्वेश्वरगुरुं शेषवंशोत्तंसमहं वन्दे।।

कारकतत्त्वं चिन्त्यते- तत्र वक्ष्यमाणापादानत्वाद्यन्यतमम् अपादानाद्यन्यतमत्वं सङ्केतविशेषसंबन्धेन कारकशब्दो वा कारकत्वं कारकव्यवहारविषयतावच्छेदकम्। तदज्ञाने कारकव्यवहाराभावात्। तदुक्तं हरिणा-

सामान्यान्यभिधीयन्ते सत्ता वा[२] तैर्विशेषिताम्।
संज्ञाशब्दस्वरूपं[३] वा प्रत्ययैस्त्वतलादिभिः।। इति।।

तत्तत् क्रियाकारकत्वन्तु तत्तत्क्रियापादानत्वाद्यन्यतमादिचरमपक्षे सङ्केतसंबन्धेनेत्यत्र बोध्यत्वविशेषसंबन्धेनेति वाच्यम्। तत्तत्क्रियाकारकशब्दस्य सङ्केताभावात्। लक्षणे क्रियाविशेषप्रवेशात्। पश्यतो राज्ञः पुरुषो गच्छतीत्यत्र दर्शनकारकस्यापि राज्ञो न गमनकारकत्वमिति। न चाकर्मकक्रियादेः कर्मत्वाद्यप्रसिध्या कथन्तद्धटितान्यतमादि[४] तत्क्रियाकारकत्वं वाच्यमिति वाच्यम्। यत्र यद्यत् प्रसिद्धं तद्धटितान्यतमादेरेव तत्क्रियाकारकवाच्यत्वस्य वाच्यत्वादिति। केचित्तु विभक्त्यर्थद्वारा क्रियान्वयि सत्क्रियानिमित्तं कारकम्। राज्ञः पुरुषो गच्छतीत्यत्र गमनप्रयोजकस्य राज्ञो वारणाय क्रियान्वयीत्यन्तम्। तत्र साक्षात् क्रियान्वयित्वं न ग्रामादेः परम्परया तदन्विताद्यन्वयित्वरूपमन्वयित्वम्। राज्ञोप्यतो विभक्त्यर्थद्वारेति संबन्धस्य तु न क्रियायामन्वयः। संबन्धप्रकारकबोधे नामजन्योपस्थितेर्हेतुत्वात्। अत एव न संबन्धिनः कारकत्वमिति। तन्न।

---

[१]मल.- आरम्भः हरिः श्री गणपतये नमः। अविघ्नमस्तु।

[२]मल.- समता

[३]मल.- स्वररूपं

[४]मल.- तदादि

नटस्य श्रृणोतीत्यादौ नटादावतिव्याप्तेः। न च तस्य क्रियान्तरं प्रति कारकत्वाल्लक्षणत्वमिति वाच्यम्। तत्तत्क्रियाकारकस्य हि तत्तत्क्रियाघटितमवश्यं लक्षणं वाच्यम्। अन्यथा राज्ञो वारणाय अन्वयीत्यन्तोपादानवैय्यर्थ्यात्। तथा च प्रकृतक्रियां प्रति नटस्याकारकत्वात्तद्घटितलक्षणस्य अतिव्याप्तिः। तस्य प्रकृतक्रियाकारकत्वे का क्षतिरिति चेन्न। या राज्ञो गमनकारकत्वेन च राज्ञो गमनकारकत्वे तथा व्यवहारापत्तिर्बाधिका लौकिकतथाव्यवहारस्येष्टत्वात्। वैय्याकरणकारक[5]व्यवहारविषयतावच्छेदकस्य प्रकृते निर्वक्तव्यतया वैय्याकरणतथा(?)व्यवहारापत्तेः। प्रकृतेपि समानत्वात्। न च षष्ठ्यर्थसंबन्धप्रकारकबोधे नामजन्योपस्थितेर्हेतुत्वात्। नटस्य श्रृणोतीत्यादौ गीतादि[6]पदाध्याहारस्यावश्यकत्वेन तेनैव षष्ठ्यर्थान्वयात् कथं क्रियान्वयि षष्ठीविभक्त्यर्थान्वयित्वं नटस्येति वाच्यम्। नटस्य श्रृणोतीत्याद्यनुरोधात्। धातुनामान्यतरजन्योपस्थितेरेव हेतुत्वात् तदध्याहारानावश्यकत्वात्। न च नामजन्योपस्थितेरेव हेतुत्वात् तदध्याहारस्यावश्यकत्वे धातुजन्योपस्थितेरेव हेतुत्वम्। राज्ञः पुरुषः इत्यादौ चाध्याहृतधात्वर्थे षष्ठ्यर्थसंबन्धा[7]न्वय इत्यस्यापि सुवचत्वात्।

न च लाघवात् राज्ञः पुरुषः इत्यादौ षष्ठ्यर्थसंबन्धप्रकारकपुरुषविशेष्यक-बोधोऽनुभवसिद्ध इति। नामजन्योपस्थितेस्तत्र हेतुत्वमावश्यकमिति वाच्यम्। नटस्येत्यादौ धात्वर्थविशेष्यकतया बोधस्यानुभवसिद्धत्वेन धातुजन्योपस्थितेरपि तत्र हेतुत्वावश्यकत्वेन तुल्यत्वात्। प्रसिद्धतरञ्च धात्वर्थविशेष्यकशेषषष्ठ्यर्थप्रकारकबोधोदाहरणम्। सर्पिषो जानीते, मातुः स्मरतीत्यादौ ज्ञोविदर्थस्येत्यादावाकरे। न च यो नामजन्योपस्थितौ स्थितिहेतुत्व[8] एव व्युत्पन्नस्तदीयक्रियाविशेष्यकबोधप्रकार[9]तत्क्रियाप्रकारकबोध-विशेष्यत्वान्यतर इव क्रियाविशिष्टविभक्त्यर्थघटितलक्षणकरणान्न दोष इति वाच्यम्। ईदृशविपरीतव्युत्पन्नपुरुषीयक्रियान्वयघटितलक्षणकरणे

---

[5]मल.- स्या

[6]मल.- शीतादि

[7]देव.- षष्ठ्यर्थन्त

[8]मल.- हेतुत्वे वे.

[9]देव.- प्रकारकत्वं

विभक्त्यर्थद्वारे[१०]त्यपहाय साक्षात् क्रियान्वयघटितस्य लक्षणस्य सुकरत्वात्। तथा हि यो अग्रहीतशेषषष्ठ्यतिरिक्तविभक्ति-शक्तिग्रहीतत्वदलितसुबर्थसंसर्गकशेषषष्ठ्यतिरिक्तसुब्विभक्तिमत्पदार्थप्रकारकबोध-हेतुधातुजन्योपस्थितिको[११] गृहीतत्वदलिततिङर्थसंसर्गकधात्वर्थप्रकारकबोधहेतु-प्रथमान्तानामजन्योपस्थितिकः पुरुषस्तदीयोक्तसंसर्गघटितक्रियान्वयघटित-लक्षणाकरणे[१२] राज्ञः पुरुषो ग्रामं गच्छतीत्यत्र ग्रामपुरुषयोः संग्रहो न राज्ञ इति समीहितसिद्धौ विभक्त्यर्थसञ्चारेत्यनर्थकमिति उक्तसंसर्गघटितेत्युपादानान्न व्यापार इव क्रियाविशेषणेऽतिप्रसङ्गः। न च राजव्यावृत्तेन नटसाधारणेनान्ततः प्रकृतलक्षणप्रकारकप्रमाविशेष्यत्वेनावच्छिन्नस्य कारकत्वेन विवक्षितत्वान्नटस्य लक्ष्यत्वेन तत्साधारण्यं प्रकृतलक्षणस्यानुगुणमेवेति वाच्यम्। व्यवहारे व्यवहारविषयेतरसाधने वा अनुपयुक्तस्य स्वीय-कारकत्वविवक्षामात्रविषयलक्षणस्य प्रकृते निरूपणे निमित्तत्व-प्रकारकप्रमाविशेष्यत्वेन तत्घटककिञ्चिल्लघुधर्मप्रकारकप्रमाविशेष्यत्वेन वावच्छिन्नं कारकत्वेन विवक्षानिमित्तत्वादि तल्लक्षणं निरूपणीयमिति प्रकृत-गुरुलक्षणकरणायासवैयर्थ्यमिति। किञ्च नटस्य कारकत्वेन[१३] नटश्रवण[१४]मित्यत्र करणल्युडन्तोत्तरपदे गतिकारकोपपदादित्युत्तरपदप्रकृतिस्वरेण मध्योदात्तत्त्वंस्यादिति।

किञ्च अन्वयित्वमुपधानं योग्यता वा। आद्ये पच्यते तण्डुलमित्यत्र कर्तर्यतिव्याप्तिः। तत्र कर्तृवाचकाभावेनान्वयाभावात्। न च तस्यालक्षणत्वं[१५], कारकविशेषकलक्षणस्य[१६] यदुक्तस्य[१७] क्रियानुकूलकृत्यन्वयत्वस्य तत्साधारणात्। तथा च तत्र लक्ष्यत्वालक्षत्वयोः कारक आलक्षणाख्याप्यतिव्याप्तेः। अन्त्ये राज्ञोऽपि कारकत्वापत्तिः। तस्यापि संबन्धार्थकषष्ठ्यतिरिक्तविभक्तिमत्

---

[१०]मल.- चारे

[११]मल.-कीटजग्धम्

[१२]मल.- लक्षणप्रकरणे

[१३]मल.- कीटजग्धम्

[१४]उभयत्र- नटं श्रृणव

[१५]मल.- कीटजग्धम्

[१६]उभयत्र आलक्षणस्य

[१७]मल.- य सुक्त, दे.- यमुक्त

पदजन्योपस्थिति-विषयत्वरूपयोग्यतावदेकस्यसत्त्वादिति। अपि च भाविनं जानाति, घटो भवतीत्यादौ भाविघटयोरव्याप्तिः। तयोः क्रियानिमित्तत्वाभावात्। न च तयोर्न कारकत्वम्। तद्व्यवहारस्तु तत्र भाक्त इति वाच्यम्। तण्डुलं पचतीत्यादौ तण्डुलादिसाधारणस्य उक्तक्रियान्वयित्वमात्रस्य कारकव्यवहारप्रयोजकस्य भाविघटयोः सत्त्वात्। तण्डुले मुख्यो भाविघटयोर्भाक्त इति वक्तुमशक्यत्वात्। न च मुख्यक्रियाकारकव्यवहारविषयस्य प्रकृते लक्ष्यत्वात् प्रकृते कारकपदस्य च योगरूढत्वात् भाविघटयोश्च योगार्थस्य बाधात्। न मुख्यतादृशव्यवहारविषयत्वमिति अलक्ष्यमिति वाच्यम्। तथा सति योगार्थस्य कृत्याश्रयत्वस्य तण्डुलादावपि बाधात्। अलक्ष्यत्वापत्तौ उक्तकारकलक्षणस्य कर्मलक्षणस्य धात्वर्थतावच्छेदकफलशालित्वस्य चातिव्याप्तेः। न चान्यत्र घटादिनिमित्तमात्रे घटादिकारकव्यवहारात् कारकपदस्य निमित्तमात्रार्थकत्वम्। तथा च क्रियाकारकपदक्रियान्वयिन्येव प्रयोगात्। रूढिस्वीकारात् क्रियायाः कारकमिति योगाच्च। क्रियानिमित्तत्वलाभात् योगार्थस्य च भाविघटयोर्बाधान्न मुख्यतद्व्यवहारविषयत्वमिति वाच्यम्। तथापि घटं साक्षात्करोमीत्यादौ घटादावव्याप्तिः। विषयविषयीभावस्य विभक्त्यर्थत्वाभावेन विभक्त्यर्थद्वारा क्रियान्वयाभावात्। घटादेश्च मुख्यकारकव्यवहारविषयत्वात्। न च रूढ्यवच्छेदके क्रियान्वयित्वे राज्ञः पुरुषो गच्छतीत्यादौ राजव्यावृत्तये विभक्त्यर्थद्वारकस्यावश्यकत्वात् न मुख्यव्यवहारविषयत्वं घटस्येति वाच्यम्। अत्र हि विभक्त्यर्थत्वं विभक्तिजन्यशाब्दबोध[१८]विषयत्वं न तु शक्यं विभक्तिबोध्यत्वं गलरवादिः। तादृशविषयविषयीभावेन नटस्यापि क्रियान्वयित्वात्। न चास्येव विभक्त्यर्थत्वस्य लक्षणे प्रवेशान्नाव्याप्तिरिति वाच्यम्। तथा सति रथो गच्छति, घटं साक्षात्करोतीत्यादौ कारकसामान्यलक्षणाक्रान्तयोः रथघटयोः कर्तृकर्मलक्षणाव्याप्तिः तयोः कर्तृकर्मलक्षणालक्ष्यत्वे कारकाणां षड्व्याघात इत्यलम्।

## अपादानम्।

यन्निष्ठविभागजनकत्वेन यन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेन च या क्रिया विवक्षिता तत्त्वं तत्क्रियापादानकारकत्वम्। तेन ग्रामादागच्छतो[१९]ऽश्वात्

[१८]देव.- शब्दबोध

[१९]मल.- ग्रामं-गच्छतो

पततीत्यादौ अश्वग्रामयोः नागमनपतनापादानत्वं विवक्षितो अपादाने च वृक्षस्य पर्णं पततीत्यत्र न वृक्षस्य पतनापादनत्वापादनम्। यन्निष्ठेत्यादिविशेषणात् घटनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वेन पतनविवक्षायामपि घटे नातिव्याप्तिः। निष्ठेत्यादिविशेषणाच्च[२०] पर्णनिष्ठविभागजनकत्वेन पतनविवक्षायां पर्णे नातिव्याप्तिः। अत्र यत् पदं यत्पदाभिधेयपरं तेन वृक्षात् वृक्षे पततीत्यत्र सप्तम्यन्तवृक्षपदाभिधेयत्वविशिष्टस्य नापादानत्वम्। एवमग्रेऽपि बोध्यम्।

वृक्षात् पर्णं पततीत्यत्र विभागः अन्योन्याभावप्रतियोगितावच्छेदकत्वञ्च पञ्चम्यर्थः। तिङर्थश्चाश्रयः। तत्र पतनक्रियायाम् आधेयतयाश्रयः जनकत्व-स्वरूपसंबन्धाभ्यां विभागान्योन्याभावप्रतियोगिकावच्छेदकत्वे च प्रकारः। आश्रये चाभेदेन प्रथमान्तपदोपस्थापितं पर्णं विभागे एकदेशेप्यन्योन्याभावे[२१] च आधेयतया वृक्षव्युत्पत्तिबलादेकदेशान्वयस्यापि घटात्पर इत्यादाविव स्वीकारात्। तथा च वृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकवृक्षवृत्तिविभागजनकपर्णरूपाश्रयवृत्ति पतनमिति बोधः। न च तिङर्थप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेरभेदेन नामार्थप्रकारकबोधे च धातुनामान्यतरजन्योपस्थितेर्हेतुत्वात्। कथं धात्वर्थे तिङर्थः तिङर्थे[२२] चाभेदेन पर्णं प्रकार इति वाच्यम्। तिङर्थ-वर्तमानकालप्रकारकबोधे प्रथमस्य व्यभिचारात् कालातिरिक्तत्वेन तिङर्थविशेषणे तु संख्यातिरिक्ततिङर्थप्रकारकबोधे धातुजन्योपस्थितेर्हेतुत्वस्य मयापि वक्तुं शक्यत्वात्। त्वया वर्तमानकादिप्रकारकबोध इव मयापि संख्याप्रकारकबोधे कार्यकारणभावान्तरस्य विवक्तव्यत्वात्। द्वितीयहेतुहेतुमद्भावे तिङोप्युपादानात्। न च तदुपादाने गौरवात्तिङर्थप्रकारकप्रथमान्तार्थविशेष्यकबोधः स्वीक्रियतामिति वाच्यम्। तथा सति त्वया धात्वर्थस्तिङर्थे तिङर्थः प्रथमान्तार्थ इति श्रृंखलया[२३] बोधो वाच्यः। तथा च धात्वर्थप्रकारकबोधे हेतुजन्योपस्थितिरिति तिङोप्युपादाने तवापि गौरवात्।

न चोभयत्रापि कार्यकारणभावसाम्ये क्रियाविशेष्यकभावबोध इत्यत्र किं विनिगमकं भावप्रधानमाख्यातमिति यास्कस्मरणात्। अभियुक्तानां तथा

[२०]देव.- तदिति अधिकः पाठः

[२१]मल.- लुप्तम्

[२२]मल.- लुप्तम्

[२३]उभयत्र श्रृंखलया

अनुभावनिश्चयेन भवदुक्तकार्यकारणभावाकल्पनात्। न चास्मदीयकार्यकारणभावव्युत्पन्नस्य तिङर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिरेव हेतुः। व्युत्पत्तिभेदेन कार्यकारणभावभेदात्। कथमन्यथा विपरीतव्युत्पन्नस्य घटः कर्मत्वमित्यादितो घटमानयेत्यनेन सामान्याकारको बोध इति। नामार्थविशेष्यको बोधः संभवत्येवेति वाच्यम्। यतो न वयं तादृशबोधे विवदामहे। किन्तु तादृशव्युत्पत्तेरभियुक्तव्युत्पत्तिविपरीतत्वमाचक्ष्महे इति। यत्तु विभागः परसमवेतत्वञ्च पञ्चम्यर्थः। तथा च वृक्षवृत्तिविभागजनकवृक्षभिन्नसमवेतपतनाश्रयः पर्णमिति बोध इति। तत्र पञ्चम्यर्थतावच्छेदके भेदे प्रकृत्यर्थस्य प्रतियोगितासामान्येन अन्वये स्वस्मात् पततीत्यपि स्यात्। स्वस्मिन्नपि द्वित्वावच्छिन्नप्रतियोगिकस्वभेदवद्वृत्तिपतनार्थसत्वात्। प्रकृतावच्छेदकावच्छिन्नप्रतियोगितया तथात्वे च द्रव्यात् पततीत्यपि न स्यात्। पतनस्य द्रव्यत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वाभावात्। प्रकृत्यर्थावच्छेदकाश्रययत्किञ्चिद्वृत्तित्वा[२४]वच्छिन्नप्रतियोगितया तथात्वे च वृक्षात् पतति पर्णे पर्णात् पर्णं पततीत्यपि स्यात्। तत्पर्णपतनस्य तत्पर्णवृत्तिविभागजनकत्वात् पर्णव्यक्त्यन्तरत्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वाच्चेति यावत्।

व्यक्तिर्विभागेऽन्वेति। तद्व्यक्तित्वावच्छिन्नप्रतियोगितया प्रकृत्यर्थस्य भेदेऽन्य इति गुरुभूत[२५]संबन्धव्युत्पत्तिविशेषः कल्पनीयः। पूर्वमते तु उक्तातिप्रसंगवारणाय विभागान्वयिप्रकृत्यर्थस्याधेयतयेति विशेष इति। अत्र धात्वर्थतावच्छेदकफलभिन्नत्वमपि लक्षणे विभागविशेषणत्वेन विवक्षणीयम्। तेन वृक्षं त्यजतीत्यत्र त्यजतेः स्पन्दते पर्णमित्यत्र स्पन्दतेश्च वृक्षे नापादानत्वम्। न चैवं सार्थाद्धीयत इत्यत्र कथं सार्थस्यापादानत्वं जहातेरपि[२६] विभागजनकक्रियावाचिना त्यजिना समानार्थत्वादिति वाच्यम्। जहातेरिहापगमनार्थत्वेन[२७] तस्य कर्मकर्तरि हीयत इत्यस्यापगच्छतीत्यर्थ इति। ग्रामादपगच्छती[२८]तिवदिहापादानत्वाक्षतेः।

[२४] देव.- व्यक्तित्वा.

[२५] मल.- गुरुभृत

[२६] मल.- लुप्तम्

[२७] मल.- रिहापणं

[२८] मल.- [illegible]

अपगमनन्त्विह विभागः तथा च विभागावधित्वरूपवक्ष्यमाणापादानान्तरेणेह पञ्चमीति बोध्यम्।

यद्वा यन्निष्ठविभागेत्यत्र यन्निरूपितेति वाच्यम्। अन्वयोऽपि विभागे प्रकृत्यर्थस्य निरूपितत्वसंबन्धेन वृक्षं त्यजतीत्यत्र तु वृक्षनिष्ठो[२९] विभागो विवक्ष्यते न तु वृक्षनिरूपित इति नातिप्रसङ्गः।

बोधाकारकथने च सर्वत्र वृक्षनिष्ठविभागेत्यत्र वृक्षनिरूपितविभागेति बोध्यम्। स्पन्दत इत्यत्र वृक्षवारणन्तु फलावच्छिन्नक्रियाबोधकधातुबोध्यत्वेन क्रियाविशेषणेनेति ध्येयम्[३०]। वस्तुतः अन्योन्याभावप्रतियोगितावच्छेदकत्वं धात्वर्थतावच्छेदके फलेऽन्वेति। विभागश्च क्रियायां नियमश्च पञ्चम्यर्थविभागप्रकारकबोधे। धातुजन्योपस्थितेर्विशेषतया तादृशान्योन्याभाव-प्रतियोगितावच्छेदकत्वप्रकारकबोधे जनकत्वसंबन्धेन प्रकारता तत्संबन्धेन धातुजन्योपस्थितेः फलस्यापि पृथक् धात्वर्थत्वे विभागप्रकारकबोधे क्रियात्वविशिष्टे विषयतयान्योन्याभावप्रतियोगितावच्छेदकत्वप्रकारकबोधे संयोगत्वविशिष्टविषयतासंबन्धेन तस्याहेतुत्वात्।

यद्वा विभागोऽपि प्रयोज्यत्वसंबन्धेन फलेऽन्वेति। इत्थञ्च प्रयोज्यत्व-संसर्गावच्छिन्नविभागनिष्ठप्रकारतानिरूपितविशेष्यत्वान्योन्याभावप्रतियोगिताव-च्छेदकत्वनिष्ठस्वरूपसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यत्वान्यतरसंबन्धेन उक्तपञ्चम्यर्थान्यतरप्रकारकबोधे उक्तप्रकारतया संयोगत्वविषयतया धातुजन्योपस्थितिहेतुरिति एक एव हेतुमद्भावः। लक्षणमपि तादृशविवक्षाघटितमेव वाच्यम्। तथा च वृक्षवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकायोद्देशसंयोगजनक-वृक्षवृत्तिविभागजनकं वृक्षवृत्तिविभागप्रयोज्यतादृशसंयोगजनकं वा पतनं पर्णरूपाश्रयवृत्तिबोधः। एवं त्यजतीत्यत्र न वृक्षस्यापादानत्वम्। धात्वर्थतावच्छेदके विभागे वृक्षनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्याविवक्षितत्वात् संयोगस्य धातुबोध्यत्वाभावाच्च वा[३१]। स्पन्दत इत्यत्र वृक्षेऽतिप्रसङ्गः। धात्वर्थतावच्छेदकस्य धातुबोध्यसंयोगस्य चाभावात्।

न चैवमाकाशादाकाशं गच्छतीत्यत्र फलीभूतस्याकाशस्य योगस्याकाश-

---

[२९]देव.- वृक्षमिष्टो

[३०]देव.- ध्ययं

[३१]मल.- न वा

निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वात् कथमाकाशमपादानमिति वाच्यम्। एकशक्याकाशपदस्य तदुपादानलाक्षणिकत्वात्। अत्र यच्चेति मते फलस्य पृथक् धात्वर्थत्वपक्षे स्पन्दबोधकत्वं धातुविशेषणं देयम्। तेन वृक्षात् पततीति पर्णे देशान्तरेण संयोज्यमाने संयोगं प्रति वृक्षस्य नापादानत्वमिति। वृक्षात् संयुज्यत इति न प्रयोगः। तथा च धात्वर्थक्रियायां यदीयविभागजनकत्वं धात्वर्थावच्छेदके तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं विवक्ष्यते तत्तद्धात्वर्थक्रियापादानमिति। धात्वर्थतावच्छेदके यदीयविभागप्रयोज्यत्वं तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं विवक्ष्यते तत्तद्धात्वर्थक्रियापादानमिति। फलस्य पृथक् धात्वर्थत्वे यद्धात्वर्थस्पन्दे यदीयविभागजनकत्वं धात्वर्थत्वसंयोगे च तन्निष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वं विवक्ष्यते तत्तद्धात्वर्थापादानमिति। स्पन्दबोधकस्य यस्य धातोर्बोध्यसंयोगे च यदीयविभागप्रयोज्यकत्वादि विवक्ष्यते तत्तद्धात्वर्थस्यापादानमिति लक्षणनिष्कर्षः। अत्र स्पन्दसंयोगं वा प्रतिवृक्षादेरपादानत्वाबोधो विनात्ववधिना नापाय कुत इति हर्युक्तेरवसीयते।

वृक्षाद्विभजत इत्यत्र यदा धात्वर्थकत्वेन प्रकृतविभजनक्रिया विवक्ष्यते तत्तत्कृतविभजनक्रियापादानं आश्रयत्वमवधित्वं वा पञ्चम्यर्थः। तथा च वृक्षावधिकविभागाश्रयवृत्तिरिति बोधः। एतदुभयापादानस्य ग्राहकञ्च 'ध्रुवमपायेऽपादान'मिति पाणिनिसूत्रम्। अपायो विभागः तज्जनिता क्रिया च तस्मिन् साध्ये ध्रुवमवधिभूतमपादानसंज्ञं स्यात् इति तदर्थः इति।

वलाहकाद्विद्योतते विद्युदित्यत्र निस्सरणजन्यविद्योतनं विद्यतेरर्थः। निस्सरणं संयोगजनिता क्रिया व्युत्पत्तिविशेषादेकदेशेऽपि निस्सरणे पञ्चम्यर्थान्वयः। निस्सरणविद्योतने पृथगेवार्थौ। एकपदोपात्तयोरपि प्रत्ययाद्यर्थवत् परस्परमन्वयः। तथा च वलाहकवृत्ति-विभागजनकवलाहकनिष्ठान्योन्याभावप्रतियोगितावच्छेदकनिस्सरणजन्यविद्योतनं विद्युद्रूपाश्रयवृत्तीति बोधाकारः।

कुतो भवानिति प्रश्ने पाटलीपुत्रादित्युत्तरे चागच्छतीत्यध्याहारेणान्वयः। तथा च किं शब्दस्य प्रश्नविषयार्थत्वात् प्रश्नविषयवृत्तीत्यागमनाश्रयो भवानिति प्रश्नवाक्ये पाटलीपुत्रवृत्तीत्याद्याश्रयान्त उत्तरवाक्ये बोधयति अनयोरप्यपादनयोः पूर्वसूत्रेणैव संग्रह इति बोध्यम्।

अधर्मात्जुगुप्सत इत्यत्रानिष्टसाधनताज्ञानप्रयोज्या निवृत्तिरनिष्टसाधनता-ज्ञानरूपा निन्दा वा धात्वर्थः। संबन्धत्वेन विशेषनिरूपेण वा भासते। अधर्माद्विरमतीत्यत्र विषयत्वं पञ्चम्याः धात्वर्थश्च कृतिध्वंसः समानकालत्वमभावश्च तध्वंसः सामानाधिकरण्येन कृतौ सा समानकालत्वे तच्चाभावे च स कृतिध्वंस आकाङ्क्षाविशेषबलात् प्रकारः। एकैव ध्वंसव्यक्तिः। पूर्वोत्तरमाकाङ्क्षा[32]वशादेव भासते। तथा च अधर्मविषयकस्वसमानाधिकरणस्वसमानकानकृतिध्वंस आश्रयवृत्तिरिति बोधः। अत्र स्वोत्पत्त्यवच्छेदकशरीरजातीयशरीरावच्छिन्नसमवायेन सामानाधिकरण्यं वाच्यम्। साजात्यञ्च समभिव्याहृतदेवदत्तादिपदोपस्थापितदेवदत्तादिजात्या। तेन भाविदेहान्तरावच्छेदेनाधर्मकरणे स्वसमानाधिकरणतत्कृतिसमान-कालत्वाद्देतत्कृतिध्वंसस्य कथं तमादाय देवदत्तोऽधर्माद्विरमतीति प्रयोगो न कथञ्च युवशरीरावच्छेदेनाधर्मं कुर्वत्यपि बालशरीरावच्छेदेन उत्पन्नचरमकृतिध्वंस सामानाधिकरण्याच्च। न चेदमेव कृतिध्वंसमादाय भाविदेहावच्छेदेनाधर्मकरणेऽपि भाविदेहावच्छिन्नेऽपि चैत्रोऽधर्माद्विरमतीति प्रयोगापत्तिरिति वाच्यम्। तथाऽपि चैत्रादि-पदसमभिव्याहारे कर्तृबोधकपदबोध्यशरीरावच्छिन्नसमवायेन सामानाधिकरण्यस्य व्युत्पत्तिविशेषबलेन भानात्। चैत्रादिपदविशिष्टात्मबोधने चैत्रादिशरीरस्यापि बोधनात्।

आत्मा विरमतीत्यादौ चाशुद्धसमवायेन सामानाधिकरण्यं व्युत्पत्तिबलेन भासते इति शरीरबोधकर्तृपदाभावेऽपि न क्षतिः। केचित्तु करणानन्तरं यावज्जीम् अकरणं धात्वर्थः इति। तन्न अकुर्वत्यपि देवदत्ते चैत्रीयकरणोत्तरयावज्जीवाकारणवत्वात् विरमति प्रसङ्गात्। किञ्च यावज्जीवमकरणं जीवव्यापकमकरणं करणध्वंसः करणात्यन्ताभावो वा। नाद्यः। कुर्वत्यपि आद्यकृतिध्वंसमादाय विरमतीत्यापत्तेः। न च तस्य तज्जीवनव्यापकत्वम् अद्य कृतिकालेऽभावादिति वाच्यम्। करणोत्तरव्यापकत्वस्यावश्यकत्वात्। अन्यथा संप्रतिपन्नस्थलेऽपि विरमतीत्यनापत्तेः। नान्त्यः[33]। पूर्वपरयोरधर्मकरणे मध्ये मुहूर्तमात्रमकरणेऽपि विरमत्यापत्तिः। अत्यन्ताभावस्य अनित्यतया तदात्मवृत्तितया च कालिकदैशिकाभ्यां

[32]मल.- कात्त

[33]मल.- नान्त्य

जीवनव्यापकत्वात्। न च प्रत्युत्तरजीवनकालव्यापकविशेषणतयाभावो व्यापकः दैशिक[३४]संबन्धेन च जीवनं व्याप्यमिति नातिप्रसङ्ग इति वाच्यम्। यत्किञ्चित्पुरुषीयाधर्मकृत्युत्तरजीवनकालव्यापकविशेषणतया च व्यापकस्य कृत्यभावस्य उक्तस्थलेऽपि सत्त्वात् अतिप्रसङ्गतादवस्थ्यात्। न च यत्पुरुषीय यत्कृत्युत्तरजीवनकालव्यापकविशेषणतया तत्पुरुषीयजीवनसमानाधिकरण स्तत्कृत्युत्तरत्वविशिष्टः कृत्यभावो धात्वर्थः। तत्तत्पुरुषवाचकपदसमभिव्याहारस्य नियामकत्वाच्च। न देवदत्तीयकृत्युत्तरजीवनकालव्यापकविशेषणतया तत्कृत्युत्तरपद[३५]भावसत्त्वेऽपि उक्तस्थले चैत्रो विरमतीति न प्रयोग इति वाच्यम्। तथा सति प्रतिपुरुषमनन्तकल्पनागौरवेणास्मदुक्तस्यैव न्याय्यत्वादिति।

प्रमाद्यतीत्यत्र पञ्चम्यर्थो विषयिता। धात्वर्थः अधिकार-विशिष्टेष्ट[३६]साधनताज्ञानाभावः। इष्टसाधनताज्ञाने च पञ्चम्यर्थान्वयः। अत्र जुगुप्सादीनां विषयत्वेन विवक्षितत्वात्तेषामपादानं तत्संग्राहकञ्च 'जुगुप्साविरामप्रमादार्थानामुपंख्यानम्' इति वार्तिकम्। अत्र सौत्रध्रुवपदेन आकाङ्क्षावशेनान्वयादेतेषां ध्रुवं विषयित्वेन विवक्षितमपादानमिति वक्तव्यमिति तदर्थादिति।

चोरात् बिभेतीत्यत्र हेतुत्वं हेतुमत्वं वा पञ्चम्यर्थः। अयञ्च धात्वर्थः। तच्चानिष्टज्ञानं धनिकं चोरात् परित्रायत इत्यत्र उक्तन्तत् पञ्चम्यर्थः। धात्वर्थस्तु अनिष्टाभावानुकूलो व्यापारः। उभयत्र पञ्चम्यर्थो निषेधे सति। तथा च चोरहेतुकानिष्टज्ञानं धनिककर्मकचोरहेतुकानिष्टाभावानुकूलो व्यापार आश्रयवृत्तिरिति बोधः। यत्तु परित्रायत इत्यत्र भयाभावो धात्वर्थ इति। तन्न। तथा सति धनिकस्य त्वन्मते धात्वर्थतावच्छेदकफलाभावेन तादृशफलाश्रयरूपकर्मत्वाभावापत्तेः इति। अत्र तद्धेतुकत्वेन भयादिक्रियान्तर्गतमनिष्टं विवक्ष्यते तत्तत्क्रियापादानम्। तत्तदर्थकञ्च 'भीत्रर्थानां भयहेतुः' इति सूत्रम्। अत्र भयनिष्ठम्। तथा च भयत्राणार्थप्रतिपाद्यानिष्टहेतुत्वेन विवक्षितं यत्तत्तत्क्रियापादानमित्यर्थः। यत्तु व्याघ्रात् बिभेतीत्यादि

---

[३४]मल.- दैनिक

[३५]देव.- नाधिकरणकृत्युत्तरकृत्य

[३६]देव.- विशिष्ट

पञ्चमीनामपादाने किन्तु भीत्रर्थानामिति सूत्रविहितेति तत्प्रामादिकम्। तत्सूत्रस्यापादानसंज्ञाप्रकरणस्तत्वात्। तत्र पञ्चमीप्रकरणाभावाच्च कृष्णात् पराजयते, अध्ययनात् पराजयते इत्यदौ धात्वर्थौ अनिष्टं पञ्चम्यर्थौ जन्यत्वम्। न तु –[37]षेमात्रं विषयत्वञ्च पञ्चम्यर्थः। अभिवादनेऽपि अभिभूयमानात् पराजयत इति प्रयोगप्रसङ्गात्। एतदपादानबोधकं 'पराजेरसोढ' इति सूत्रम्। अत्रासोढनिष्ठसाधनत्वेन विवक्षितः। तथा च राज्यर्थौ (धात्वर्थौ)ऽदृष्टसाधनत्वेन विवक्षितः। अतः क्रियापादानमित्यर्थः। शत्रून् पराजयत इत्यत्र शत्रवोऽनिष्टसाधनत्वेन न विवक्षिताः किन्तु निष्ठाश्रयत्वेन इति न तेष्वतिव्याप्तिः।

यवेभ्यो[38] गां वारयतीत्यत्र संयोगो व्यापारो भावश्च धात्वर्थः। पञ्चमीद्वितीययोः वृत्तित्वमर्थः। तथा च यववृत्तिसंयोगः तज्जनकव्यापारस्य गोवृत्तिर्यो भावः तदनुकूलो व्यापार इति बोधः। आकाङ्क्षावशात् तात्पर्यवशाद्वा तादृशव्यापारस्य भक्षणादेर्भक्षणत्वावच्छिन्नप्रतियोगिको भावो भासते। येषां यवानां भक्षणमप्रसिद्धं तानादाय वारयन्तीति प्रयोगे तादृशो भावो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्वीकारे तु भक्षणस्य संबन्धविषयावच्छिन्नप्रतियोगिताकस्तादृशव्यापारत्वावच्छिन्नभावो भासत इत्युपेयताम्। एवञ्च प्रकृतधात्वर्थप्रकारीभूतफलांशे प्रकारीभूतं फलं यद्वृत्तित्वेन विवक्षितं तत्तत्क्रियापादानम्। धात्वर्थप्रकारीभूतफलस्य गोवृत्तित्त्वेन विवक्षितत्वेऽपि तत्प्रकारीभूतधात्वर्थमिति गहनातिप्रसङ्गः। अत्र 'वारणार्थानाम् ईप्सित' मिति सूत्रम्। अत्र ईप्सितमाप्तुमिष्टम्, आप्तिश्च फलाश्रयत्वेन, फलञ्च सन्निधानात् प्रकृतधात्वर्थतावच्छेदकम्। तथा च वारणार्थकधात्वर्थतावच्छेदकफलाश्रयत्वेन इच्छाविषयस्तत्क्रियान्वयित्वेन विवक्षितः प्रकृतापादानमिति सूत्रार्थः। गवादेस्तथात्वेऽपि परया कर्तुरीप्सितेति कर्मसंज्ञया यवादौ सावकाशया अपादानसंज्ञाया बाधादपादानत्वं न। तदर्थमेव च तत्र तमब्ग्रहम्। यवादीनां न धात्वर्थतावच्छेदकफलेच्छामुख्यविशेष्यत्वरूपम्। न हि यवादयो गवादिवृत्तिव्यापारजन्यसंयोगवन्तो भूयासुरिति इच्छा। किन्तु गवादयो मा भक्षन्निति यवादौ सावकाशापादानसंज्ञेति परत्वात् कर्मसंज्ञया बाध्यत इति। यदि च प्रतिषिद्धेऽपि भक्षयत्यपि वारयतीति प्रयोगस्तदाभावस्थानेन

[37]उभयत्र न स्पष्टम्

[38]मल.- धवेभ्यः Kavikulguru Kalidas Sanskrit University Ramtek Collection

प्रकारितेच्छा निवेशनीया। तथा च यद्विशेष्यकतादृशाभावप्रकारकेच्छाविशिष्टो व्यापार इति बोधः। गवादेश्च गामिच्छतीत्यादाविव प्रकृते कर्मकत्वोपस्थितिः। एवमेव च कूपादन्धां वारयतीत्यादौ बोधाकार इति। अत्र लक्ष्यमाणोदाहरणेषु लक्ष्यत्वाभिमतस्य यत्क्रियायां यथान्वयः तत्क्रियायां तदन्वयघटितं लक्षणं बोध्यम्। तत्संग्राहकञ्च नाद्योप्युदाहरणानुसारेणैवावसेय इति।

केचित्तु कूपादन्धं वारयतीत्यत्र पतनाभावेच्छापूर्वकपतनाभावकूलो यो व्यापारः तद्विषयकृतिमानिति वाक्यार्थ इत्याहुः। तेषां यवेभ्यो गां वारयतीत्यादौ क्षणाभावघटितं वारणं धात्वर्थ इत्यनेकशक्तिकल्पनागौरवमिति।

उपाध्यायादन्तर्धत्ते शिष्य इत्यत्र प्रत्यक्षविरोधिदर्शनाभावेच्छापूर्वकः सन्निकर्षाभावः विशेष्यरूपेण प्रत्यक्षविरोधित्वेन वा धात्वर्थः। पञ्चम्यर्थो वृत्तित्वम्। स च दर्शनभावे अन्वेति। विरोधित्वाभावानुकूलत्वमुक्तरीत्या अभावादौ शक्तिः। व्युत्पत्तिविशेषबलात् समभिव्याहृत[३९]शिष्यादिविषयकदर्शनत्वावच्छिन्नप्रतियोगितया दर्शनाभावे प्रकारतयान्वेति।[४०] उपाध्यायवृत्तिस्पन्दनाभावेच्छापूर्वकस्वदर्शनविरोधिदर्शनसन्निकर्षाभावः शिष्यवृत्तिरिति बोधः। एतदपादानसंग्राहक'मन्तर्द्धौ येनादर्शनमिच्छती'ति यत्कर्तृकस्वदर्शनाभावमन्तर्द्धिनिमित्तमिच्छति[४१] सोपादानमिति तदर्थ इति।

ताल्वादिव्यापारः पञ्चम्यर्थः। स च प्रयोज्यत्वसंबन्धेन धात्वर्थेऽन्वेति। 'आतोपयोग' इति सूत्रेणैतदपादान इति संग्रहः।

पुत्रात् प्रमोदो जायत इत्यत्र जन्यत्वं पञ्चम्यर्थः। तच्च स्वाश्रयवृत्तित्वेन धात्वर्थ उत्पत्तौ अन्वेति न तु प्रमोदे साक्षात् संबन्धेन। तथा सति पुत्रस्यानपादानसंज्ञानापत्तेः। साहित्यक्रियान्वयित एवेति सिद्धान्तात्। अत्र 'जनिकर्तुः प्रकृति'रिति सूत्रमपादानसंग्राहकम्।

हिमवतो गङ्गा प्रवहतीत्यत्र आद्यो भारतवर्षीयं न तत् संसर्गस्थभूसंयोगो धात्वर्थः। विभागकालवृत्तित्वं पञ्चम्यर्थः। न तु संयोगध्वंसकारवृत्तित्वम्।

---

[३९] मल.- समभिहत

[४०] देव.- प्रकारः। तया इति विश्लिष्य पाठः।

[४१] मल.- अन्तर्धिमिच्छति। निमित्तमिति [illegible]

सर्गान्तरस्थप्रयोगध्वंसकालवृत्तित्वमादाय प्रयागात् भवतीत्यापत्तेः। संयोगं न तत् सर्गस्थदाने गौरवात्। हिमवद्विभागकालवृत्तिः अद्य भारतवर्षीये तत्सर्गस्थसंयोगो गङ्गाश्रित इति बोधः। अत्र भूसंयोगस्योत्पत्तिविशिष्टस्य विभागकालवृत्तित्वं बोध्यम्। तेन हिमवदधोदेशविभागकालवृत्तित्वेऽप्याद्यसंयोगस्य न हिमवदधोदेशात् प्रवहतीति बोधः प्रयोगः। अत्र 'भुवः प्रभव' इत्यपादानसंग्राहकमिति। अत्र कारकलक्षणोक्तरीत्या तत्तदपादानत्वादन्यतमादिकं कालापादानलक्षणं बोध्यम्।

## सम्प्रदानम्।

यत्क्रियासंबन्धजन्यफलभागित्वेनोद्देश्यं यत् तत्तत्क्रियासंप्रदानम्। यथा विप्राय धनं ददातीत्यत्र फलजनकत्वेनोद्देश्यत्वनिरूपितत्वं[४२] चतुर्थ्यर्थः। तच्च स्वत्वनिवृत्तिपरसत्त्वजनकक्रियाविशेषरूपददात्यर्थतावच्छेदके खण्डशश्शक्तिपक्षे ददात्यर्थे वा सत्त्वेऽन्वेति। द्वितीयार्थो वृत्तित्वम्[४३]। तच्च स्वत्वतन्निवृत्योरन्वेति। फलविशेषश्च फलत्वेन विशेषरूपेण वा समभिव्याहारविशेषबलात् तात्पर्यतो वा भासते। स्वत्वनिवृत्तिश्च समभिव्याहारबलात् कर्तुरेव। तथा च विप्रसुख[४४]जनकत्वेनोद्देश्य विप्रनिरूपितधनवृत्तिस्वस्वत्व[४५]निवृत्तिजनकक्रियाश्रयवृत्तिरिति बोधः। पितृस्वर्गोद्देशेन धनदाने पितुर्न संप्रदानत्वम्।

वृक्षायोदकं सिञ्चतीत्यत्र द्रवद्रव्यक्रियानुकूलो व्यापारो धात्वर्थः। तत्र धात्वर्थतावच्छेदकक्रियायां फलजनकत्वेनोद्देशत्वं द्वितीयार्थो वृत्तित्वं चान्वेतीत्याद्यूह्यम्। अत्र 'कर्मणा यमभिप्रैति स संप्रदान'मिति सूत्रम्। तदर्थश्च कर्मत्वस्य तत्तत्क्रियानिरूपितत्वात्। क्रियार्थस्य 'कारके' इत्यधिकारात् यत्क्रिया कर्मणा यमभिप्रैति संबध्नाति[४६] तत्क्रियां प्रति स संप्रदानमिवेति। अत्र यमिति द्वितीयया फलभागित्वेनेप्सिततमत्वं संप्रदानस्य लभ्यत इति।

अजां ग्रामं नयतीत्यत्र अजया ग्रामस्य संबन्धेऽपि न संप्रदानत्वम्। फलभागित्वेनोद्देशे तु अजां ग्रामाय नयतीति ग्रामस्य फलसंप्रदानत्वमिष्यते।

[४२] देव.- निरूपितत्त्वंइति द्विः पाठः

[४३] मल.- वृत्तित्वन्तु

[४४] मल.- सुध

[४५] देव.- स्वतः

[४६] देव.- बध्नाति

वयन्तु[४७] यत्क्रियाकारणीभूतेनतत्क्रियाकर्मणा कर्ता यमभिप्रैति स तत्क्रियायां संप्रदानमिति सूत्रार्थः। विप्राय धनं ददातीत्यत्र धनं दाने करणम्। परसत्त्वहेतुदानस्य घटकं यत् स्वत्वं तद्धेतुत्वात्। अतो लक्षणसंगतिः। ग्रामं गच्छतीत्यादौ ग्रामजन्यसंसर्गादि[४८]भागित्वेनोद्देशस्य चैत्रादेर्वारणाय करणीभूतेति। ग्रामस्तु अत्राकरणमिति गमनघटकोत्तरसंयोगहेतुत्वात् ग्रामस्य को विशेष इति चिन्त्यम्।

अत्र केचित् संप्रदानमिति महासंज्ञाकरणात् अर्थसंज्ञात्वात् सम्यक् प्रदीयते यस्मै तत्संप्रदानमिति रजकस्य वस्त्रं ददाति घ्नतः पृष्ठं ददातीत्यादौ न संप्रदानत्वम्। स्वत्वनिवर्तकपरस्वत्वजनकक्रियाविशेषस्य सम्यक् दानत्वादिरिति। तन्न। तस्मै चपेटां ददातीति भाष्यप्रयोगात् अन्वर्थत्वास्वीकारात्। एवञ्च रजकस्य वस्त्रं ददादीत्यादयः प्रयोगाः शेषत्वविवक्षया बोध्याः। संप्रदानविवक्षायान्तु रजकाय वस्त्रं ददातीत्यादयोपि बोध्याः।

पत्ये शेते इत्यत्र धात्वर्थे फले जनकत्वे[४९]नोद्देश्यत्वरूपः चतुर्थ्यर्थः अन्वेति। तत्संग्राहकं 'क्रियाग्रहणं कर्तव्य'मिति वार्तिकम्। क्रिययाभिप्रेयमाणं संप्रदानमिति तदर्थः। यत्क्रियाजन्यफलभागित्वेन यदुद्देश्यं तत्क्रियासंप्रदानमिति फलितम्। न च कटं करोतीत्यादौ कटादावव्याप्तिः। निरवकाशया कर्मसंज्ञया अकर्मक्रिया-विषयसावकाशायाः संप्रदानसंज्ञाया बाधेन वार्तिकस्य कर्मभिन्नत्वप्रदेशे न च लक्ष्यस्यातिप्रसक्तेः। कथं तर्हि कर्मसंप्रदानसंज्ञाभ्यां द्वितीयाचतुर्थ्योः संभवात् गत्यर्थकर्मणीति सूत्रप्रत्याख्यानं भाष्यकृतः संगच्छत इति चेदित्थं धात्वर्थतावच्छेदकफलाश्रयविवक्षायां कर्मत्वात् द्वितीयायाः यथाकथञ्चित्क्रिया-जन्यफलभागित्वेन उद्देश्यत्वे चतुर्थ्याः उपपत्तौ किं गत्यर्थसूत्रेणेति।

देवदत्ताय रोचते मोदक इत्यत्र वृत्तित्वं चतुर्थ्यर्थः। अभिलाषो धात्वर्थः। विषयतया आश्रय आख्यातार्थः। तथा च मोदकविषयकोऽभिलाषो देवदत्तवृत्तिरिति[५०] बोधः। तत्संग्राहकञ्च 'रुच्यर्थानां प्रीयमाण' इति सूत्रम्। देवदत्ताय श्लाघतेऽनुतिष्ठते शपते इति। आद्ययोः क्रिययोर्योगे

---

[४७] मल.- यत्तु

[४८] मल.- संगादि

[४९] मल.- जन

[५०] मल.- वृत्तिक इति

कर्मत्वमन्त्ययोः संबन्धः चतुर्थ्यर्थः। तथा च देवदत्तं स्तौतीत्यर्थः[51]। अत्र श्लाघादिज्ञापयितुमिष्यमाणत्वे सत्यैव देवदत्तादीनां संप्रदानत्वम्। यद्वा ईदृशप्रयोगे श्लाघादिधातूनां स्तुत्यादिज्ञापनमित्यर्थः। अत्र पक्षे सर्वप्रकृतक्रियायोगकर्मत्वं चतुर्थ्यर्थः। तच्च ज्ञापनेऽन्वेति। तथा च स्तुत्यादिकं देवदत्तं बोधयतीत्यर्थः। एतत्संग्राहकं 'श्लाघानुह्नुङ्स्थाशपां ङीप्स्यमान' इति सूत्रम्। णिजर्थकर्मणि शानजित्यवसेयम्।

देवदत्ताय शतन्धारयत इत्यत्र संबन्धित्वं चतुर्थ्यर्थः। तच्च धारणेऽन्वेति। संबन्धश्च देवदत्तीयद्रव्यघटितः। तेन[52] यत्किञ्चित्संबन्धिनिरूपितेन संप्रदानत्वमिति न चतुर्थ्यर्थः। स्वत्वसंबन्धः शतेऽन्वेतु। तत एवात्रातिप्रसङ्गभंगादिति[53] किन्तद्धटितपरम्परासाधारणान्वयेनेति[54] संबन्धेनेति वाच्यम्। क्रियान्वयिन एवापादानत्वादीनां कारकसूत्रे निर्णीतत्वात्। तदभावे संप्रदानस्याप्यभावेन चतुर्थ्या एवाभावात्। एवञ्च शतान्वये देवदत्तस्य शतं धारयतीत्येव साधु। 'धारेरुत्तमर्ण 'इत्यनेन अत्र संप्रदानत्वम्।

पुष्पेभ्यः स्पृहयतीत्यत्र कर्मत्वं संबन्धत्वेन विषयत्वरूपसंबन्धश्चतुर्थ्यर्थः। स च यथा तात्पर्यमेकैकशः समं समुदितो वा शाब्दबोधे भासते। 'स्पृहेरीप्सित ' इति संप्रदानसंज्ञाया कर्मसंज्ञाया शेषषष्ठ्योर्बाधकत्वादिति केचित्। विषयत्वं विशेष[55]रूपेण चतुर्थ्यर्थः। ईप्सिततमत्वे शेषविवक्षायां कर्मसंज्ञाषष्ठ्योरेव भावादित्यन्ये। एतत्तत्त्वंतत्र विवेचयिष्यते। एतत्संग्राहकं 'स्पृहेरीप्सित' इति सूत्रम्।

शत्रवे क्रुध्यति द्रुह्यति ईर्ष्यति असूयतीत्यत्र पूर्वयोः क्रिययोः अकर्मकत्वात् तदन्वये संबन्धत्वेन संबन्धविषयचतुर्थ्यर्थः। उत्तरयोस्तु कर्मत्वेन कर्मत्वम्। क्रुधद्रुहकर्मलक्षणे अस्पृष्टयोः क्रुधद्रुहप्रवेशः। तेन शत्रुमभिक्रुध्यति अभिद्रुह्यतीत्यत्र शत्रोर्न संप्रदानत्वम्। अत्र 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोप' इति संप्रदानत्वम्।

कृष्णाय राध्यति ईर्ष्यति इत्यत्र संबन्धत्वेन संबन्धविशेषश्चतुर्थ्यर्थः।

---

[51] मल.- स्मरति

[52] देव.- न इत्यधिकः पाठः

[53] मल.- भङ्गमिति

[54] मल.- साधागणकेन्वयेति

[55] मल.- विषय[illegible]विशेष

शुभाशुभपर्यालोचनं[५६] धात्वर्थः। कृष्णसंबन्धिशुभाशुभालोचनं[५७] आश्रयवृत्तिरित्यर्थः। 'राधीक्ष्योर्यस्य विप्रश्न' इति संप्रदानसंज्ञा।

विप्राय गां प्रतिशृणोतीत्यत्र अन्यदीयप्रवर्तनापूर्वकोऽभ्युपगमो धात्वर्थः। चतुर्थ्यर्थो वृत्तित्वम्। एकदेशप्रवर्तनायामन्वेति। तथा च मह्यं गां देहीति विप्रप्रवर्तनापूर्वको गवाभ्युपगम इत्यर्थः। तत्संग्राहकं 'प्रत्याभ्यां श्रुवः पूर्वस्य कर्ते'ति सूत्रम्।

होत्रे[५८]ऽनुगृह्णातीत्यत्र शंसनपूर्वकं प्रोत्साहनं धात्वर्थः। संबन्धत्वेन संबन्धः चतुर्थ्यर्थः। स च वृत्तित्वरूपः। समभिव्याहारविशेषबलात् प्रोत्साहे शंसने चान्वेति। तथा च हेतुवृत्तिप्रोत्साहनानुकूलो व्यापार इत्यर्थः। 'अनुप्रतिगृणश्चे'[५९]त्येतत्संग्राहकं सूत्रम्।

शताय परिक्रीणातीत्यत्र दानानन्तर्यं चतुर्थ्यर्थः। न नियतकालस्वीकरणं धात्वर्थः। अत्र लक्षणे तृतीयान्तपदानभिधेयत्वमपि प्रवेश्यम्। तेन शतेन परिक्रीणातीत्यत्र शतस्य न संप्रदानत्वम्। एतत् संग्रहणं 'परिक्रयणे संप्रदानमन्यतरस्या'मिति सूत्रम्। अत्रापि प्रति[६०]गृहान्तसंप्रदानलक्षणे यथोदाहरणं धातुविशेषाः प्रवेशनीयाः इति ध्येयम्। अत्रापि उक्तसंप्रदानान्यतमत्वादिसकलसंप्रदानसाधारणं बोध्यम्।

## करणम्।

यद्व्यापारव्यवहितोत्तरं यत्तत्क्रियानिष्पत्तिर्विवक्ष्यते तत्तत्क्रियाकरणमधिकरणादिव्यापारान्तरं यथा क्रियानिष्पत्तिर्विवक्ष्यते तदा तेषामधिकरणत्वमिष्टमेव।

वस्तुतस्तदनिर्देश्यं न हि वस्तुव्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यत इति।

---

[५६]मल.- कृष्णसम्बन्धि इत्यधिकः पाठः

[५७]मल.- लुप्तम्

[५८]मल.- पित्रे

[५९]मल.- अनुगुणश्च

[६०]मल.- अत्र विधि

काष्ठेन पचतीत्यत्र व्यापारानन्तर्यं तृतीयार्थः। तथा च काष्ठव्यापारा-व्यवहितोत्तरः पाकः इत्यर्थः। एतत्संग्राहकं 'साधकतमं करण'मिति सूत्रम्।

अत्र चतुर्थ्यन्तपदानभिधेयत्वे सति लक्षणे देयम्। तेन शताय परिक्रीणातीत्यत्र नातिव्याप्तिः। स्तोकेन स्तोकाद्वा मुक्त इत्यादौ पञ्चमीतृतीये समानार्थे इति तथैव बोधाकारो बोध्यः।

## अधिकरणम्।

कर्तृकर्मान्यतर[६१]घटितपरम्परया यत्क्रियाश्रयत्वेन यो विवक्षितः स तत्क्रियाधिकरणम्। भूतले देवदत्तः पचतीत्यत्र कर्तृघटितपरम्परया स्थाल्यां तण्डुलान् पचतीत्यत्र कर्मघटितपरम्परया क्रियाश्रयत्वेन भूतल-स्थाल्योर्विवक्षणसमन्वयः। अत्र लक्षणे अधिशीङाद्यर्थभिन्ना क्रिया प्रवेशनीया। तेन तदाश्रयत्वेन विवक्षिते नातिव्याप्तिः। तस्य हि कर्मत्वमग्रे वक्ष्यत इति।

भूतले घटोस्तीत्यत्र सप्तम्याश्रयद्वारकमाधेयत्वं धातुना कालसंबन्धः। वर्तमानत्वमाश्रयश्चाख्यातेन[६२] प्रतीयते। तथा च घटरूपाश्रयवृत्ति वर्तमानकालसंबन्धः स्वाश्रयद्वारा भूतलाधेयत्ववानिति बोधः।

न कदाचित् भूतलवृत्तौ संप्रति चाधिकरणान्तरवृत्तौ घटे भूतले घटोस्तीत्यापत्तिः। घटवृत्तिवर्तमानकालसंबन्धस्य घटद्वारा भूतलवृत्तित्वादिति वाच्यम्। यादृशकालबोधकप्रत्ययसमभिव्याहृतधातुबोध्यक्रियायां सप्तम्यार्थान्वयः तादृश-कालावच्छिन्नाधेयत्वस्वव्युत्पत्तिविशेषबलेन सप्तम्या बोधनात्।

स्थाल्यां तण्डुलान् पचतीत्यत्र कर्मद्वारकमाधेयत्वं सप्तम्यर्थः। द्वितीयार्थो वृत्तित्वं धात्वर्थे फलेऽन्वेति। इतरबोधाकारस्तु प्रागिवावधेयः।

भूतले घटोस्तीत्यत्र भूतलवृत्तिवर्तमानकालसंबन्धाभावो घटरूपाश्रय-वृत्तिरिति बोधः। नचैवं घटस्य क्रियान्वयित्वात् कथं कर्तृत्वमिति। कर्तरि लकारानुपपत्तिः। नञो द्योतकत्वात् अभावपर्यन्तस्य धात्वर्थेन क्रियान्वयित्वस्य निबाधत्वात्। विभक्त्यर्थद्वारकं हि क्रियान्वयित्वं न साक्षादिति।

---

[६१] मल.- तम

[६२] मल.- प्यातेस

तत्र तत्र निर्णीतत्वात्। न समभिव्याहारे सप्तम्यर्थाख्यातार्थवर्तत्वादिकञ्च व्युत्पत्तिविशेषबलात् प्रतियोगिभूते धात्वर्थेऽन्वेति। सप्तम्यन्तसमभिव्याहारस्थले च क्रियाभावोऽधिकरणवृत्तित्वावच्छिन्ने प्रतियोगिताको बोध्यः। तेनान्तरीक्षे घटो न पचतीत्यादौ अन्तरीक्षवृत्ति पाकस्याप्रसिद्धावपि न क्षतिः। अन्तरीक्षवृत्तित्वरूपव्यधिकरणरूपावच्छिन्नप्रतियोगिताकस्य पाकाभावस्य प्रसिद्धत्वात्। व्यधिकरणधर्मस्य प्रतियोगितानवच्छेदकत्वे तु अधिकरणवृत्तिक्रियासामान्यसंबन्धावच्छिन्नप्रतियोगिताकाभावो बोध्यः। स च क्वचित् सामानाधिकरण्यसंबन्धावच्छिन्नप्रतियोगिताकः क्वचित् व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकः इत्यन्यदेतत्। न च अन्तरीक्षे घटो न पचतीत्यादौ अन्तरीक्षवृत्तित्वस्य पाकेन सममन्वयः[६३] अयोग्यत्वादिति वाच्यम्। अयोग्यताज्ञानस्य शाब्दबोधाप्रतिबन्धकत्वात् तत्प्रतिबन्धकत्वे वा पाके अन्तरीक्षवृत्तित्वबोधाभावेऽपि उक्ताभावे घटवृत्तित्वबोधस्यैव तादृशस्थलेऽपि स्वीकारादिति।

भूतले घटो नास्तीत्यत्र घटः भूतलाधेयत्वाभावो घटाभावे भूतलाधेयत्वं घटे भूतलनिष्ठाभावप्रतियोगित्वं वा भासते इति घटतान्नैय्यायिकानां पुनर्भूतलं कथमधिकरणं क्रियार्थकारकपदानुवृत्याधारोऽधिकरणमित्यनेन क्रियान्वयिन एवाधिकरणस्यानुशासितत्वात्[६४]। विभक्तिद्वारा क्रियान्वयि कारकमिति स्वोक्तविरोधाच्च। अत एवाभियुक्तानामेनाम्मिथैव[६५] सम्बन्धः सर्वपातक्येष्ववस्थितः। सामानाधिकरणेन षष्ठ्या वा क्वचित् भावे षष्ठी च सम्बन्धविभक्त्युपलक्षणम्। तेनोपपदविभक्तिसङ्ग्रहः।

किञ्च उक्तान्वयबोधवादिनस्तवास्तीति क्रियाकर्तृत्वम्। कर्तृत्वं कर्त्रान्वेति घटे चेदतीते घटो नास्तीत्यत्र का गतिः। वर्तमानास्तिक्रियाकर्तृत्वस्य घटे संभवात्। अभावे चेत् घटो नास्ति इत्यस्यासाधुत्वं नास्तीत्यस्य सुवचत्वात्। अलमियता।

गङ्गायां घोष इत्यत्रापि आश्रयघटितपरम्परया आधेयत्वं सप्तम्यर्थः। इयान् परं विशेषः। भूतले घट इत्यादावाश्रयस्याधिकरणे साक्षात्संबन्धेन

[६३]मल.- समन्वयः

[६४]देव.- नुशासनिकत्वात्

[६५]देव.- द्विधैव

परंपरासंबन्धघटकत्वम्[६६]। इह तु गङ्गासमीपतीरवृत्तित्वरूपपरम्परया संबन्धेनेति। गङ्गासमीपतीरवृत्तित्वप्रकारकबोधतात्पर्ये तु सप्तम्या समीपतीरवृत्तित्वे गङ्गापदस्य वा स्वसमीपतीरे लक्षणा। सुब्विभक्तौ न लक्षणेत्युद्घोषस्तु परेषां निर्मूलः। भूमावित्यत्र ज्ञानज्ञाप्यत्वे पञ्चम्यां घटं जानातीत्यत्र विषयतायां जातीयायां लक्षणावादीनान्तेषां प्रतिकूलश्च। तिलेषु तैलं घटे ज्ञानमित्यस्याश्रयस्य व्यापकत्वेन विषयतया च अधिकरणसंबन्धेन परम्परासंबन्धघटकत्वम् एतत्सर्वाधिकरणसंग्रहण'माधारोऽधिकरण' मिति सूत्रम्। इदञ्च त्रिविधम्। वैषयिकमभिव्यापकमौपश्लेषिकञ्चेति। तत्र वैषयिकं घटे ज्ञानमिति। अभिव्यापकं तिलेषु तैलमिति। आभ्यामतिरिक्तं भूतलेऽस्त्यादावौपश्लेषिकमिति।

## कर्म।

परसमवेतं[६७] यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि यत् तत्क्रिया कर्म। परसमवेतत्वोपादानात् देवदत्तो गच्छतीत्यत्र गत्यर्थतावच्छेदकसंयोगशालिनि देवदत्ते नातिव्याप्तिः। धात्वर्थतावच्छेदकेत्युपादानात् गमनजन्यविभागशालिनि पूर्वदेशे न गमनकर्मत्वम्। ग्रामं गच्छतीत्यत्र द्वितीयार्थौ वृत्तित्वम्। भेदश्च संयोगजनिता क्रिया धात्वर्थः। तत्र धात्वर्थतावच्छेदकसंयोगे वृत्तित्वं क्रियायां सामानाधिकरण्येन भेदे प्रतियोगितया प्रकृत्यर्थोऽन्वेति। तथा च ग्रामवृत्तिसंयोगजनिका ग्रामभेदसामानाधिकरणा क्रिया एकाश्रयवृत्तिरिति बोधः।

गम्यते ग्राम इत्यत्र आख्यातार्थौ भेद आश्रयश्च। तत्र फलांशे आश्रयः क्रियाञ्चोक्तसंबन्धेन भेदः। भेदे च प्रतियोगितया फलाश्रयः। आश्रये चाभेदेन ग्रामोऽन्वेति। तथा च ग्रामरूपाश्रयवृत्तिसंयोगजनिका तद्भिन्नसमवेता क्रियेति बोधः। अत्र धात्वर्थतावच्छेदकत्वधात्वर्थविशेष्यजनकत्वं संसर्गजनकप्रकारबोधप्रकारकधात्वर्थप्रकारजन्यत्वसंसर्गबोधविशेष्यान्यतरधात्वर्थम्। न तु धातुशक्यतावच्छेदकत्वम्। तेन देवदत्तं गमयतीत्यत्र णिजन्तार्थप्रयोजकव्यापारे प्रकारीभूतं धात्वर्थतावच्छेदकमिति तदाश्रयस्य देवदत्तस्य निर्बाधम्। एतेन फलव्यापारयोः पृथगेव धात्वर्थत्वम् एकपदोपस्थाप्ययोरपि क्त प्रत्ययार्थवदन्वयो न विरुद्धः। कर्तृकर्माख्यस्थले फले

---

[६६]मल.- घटिक

[६७]मल.- समवेतं 

जनकतासंबन्धेन व्यापारेण[६८] धात्वर्थ आश्रयः। व्यापारफलयोः कर्मकृते स्थले च जन्यतया फले तच्च कृदर्थे आश्रये प्रकार इति लक्षणमिदम् असंभवीति निरस्तम्। न तु भेदकर्मणः प्रतियोगितासामान्येनान्वयोन्वयितावच्छेदकावच्छिन्नप्रतियोगितया वा। नाद्यः। देवदत्तः संगच्छतीत्यापत्तेः। द्वित्वाद्यवच्छिन्नप्रतियोगिताकस्य भेदस्य देवदत्तेऽपिसत्त्वात्। नान्त्यः। देवदत्तो द्रव्यं गच्छतीत्यापत्तेः। इति चेन्न। फलान्वयव्यक्तिविशेष्यत्वावच्छिन्नप्रतियोगितया भेदे कर्मान्वयस्य वाच्यत्वात्।

पाचयति[६९] देवदत्तेन यज्ञदत्त इत्यत्रापि देवदत्ते लक्षण[७०]स्यातिव्याप्तिरिति वाच्यम्। क्रियाभेदे कर्मत्वस्य भेदके[७१] णिजन्तपाचयतीत्यादि-भिन्नक्रियाघटितलक्षणस्यैव करणात्। अत एव 'गतिबुद्धिप्रत्यवसानार्थ-शब्दकर्माकर्मकाणामणि कर्ता स णौ' इति सूत्रम्। अन्येषां णिजन्तानां ण्यन्तावस्थक्रियाकर्तुः कर्मता निवर्ततया नियामकमिति सिद्धान्तम्। हारयति-कारयत्योस्तु तृतीयान्तानभिधेयत्वमपि देयम्। तेन हारयति कारयति भृत्येन कटमिति भृत्ये[७२] नातिव्याप्तिः। न च एतद्विनैव क्रियाकर्मलक्षणे उपादीयतां किमेतत् विशेषणदानेनेति वाच्यम्। हारयति कारयति भृत्यं कटमित्यत्र भृत्यस्य कर्मताया अपीष्टत्वात्। अत एव 'हृक्रोरन्यतरस्या'मिति सूत्रेण वैकल्पिकं कर्मत्वमिति।

केचित्तु क्रियामात्रं गमेरर्थः। फलं भेदश्च द्वितीयार्थः। आख्यातार्थश्च। तत्र फले प्रकृत्यर्थः प्रथमान्तार्थश्चाधेयतयान्वेति। इतरत्तु पूर्ववदेव। न चैवं त्यजिगमिस्पन्दादिना पर्यायतापत्तिः। इष्टत्वात्। ग्रामं गच्छतीतिवत् ग्रामं त्यजति ग्रामं स्पन्दते इत्यपि स्यात् इति चेत् गमिसमभिव्याहारे द्वितीयायाः संयोगरूपफलबोधकत्वं त्यजति समभिव्याहारे विभागबोधकत्वं स्पन्दि समभिव्याहारे फलबोधकत्वमित्यादि व्युत्पत्तिविशेषस्वीकारात्। कर्मत्वञ्च यद्यपि न क्रियासु[७३] फलशालित्वम्। वृक्षात् पततीत्यत्र पतनान्वितफलशालिनि वृक्षेऽतिव्याप्तेः। तथापि तत्तत्क्रियान्विततत्तत्फलशालित्वं विशेष्यवाच्यमित्याहुः।

---

[६८]मल.- व्यापारे

[६९]मल.- वाचयति

[७०]मल.- करण

[७१]मल.- भेदे

[७२]देव.- लुप्तम्

[७३]मल.- क्रिया

घटं करोति जानातीत्यादौ उत्पत्त्यनुकूलो व्यापारः विषयतापादकज्ञानादि च धात्वर्थ इति। उत्पत्तिविषयतापत्तिश्च फलमादाय घटस्य कर्मत्वमित्याद्यन्यत्राप्यूह्यम्। अत्र क्रियाद्वयं प्रति क्रमेण गतो निर्वत्यं प्राप्यञ्च कर्म। काष्ठं भस्म करोतीत्यत्र काष्ठमिति कर्म। तत्र आरम्भकसंयोगनाशो अनुकूलोत्पत्यनुकूलव्यापारश्च धात्वर्थः। आरम्भकसंयोगनाशरूपफलान्वयित्वात् काष्ठस्य उत्पत्तिरूपफलान्वयित्वाच्च भस्मनः कर्मत्वम्। अत एव द्व्यर्थः पचिरिति प्रक्रम्य तण्डुलानोदनं पचतीत्यत्र तण्डुलनिष्ठविक्लृत्तेरोदननिष्ठोत्पत्तेश्च अनुकूलो व्यापार इति अर्थकभाष्यम्। अत्र 'कर्तुरीप्सिततमं कर्मे'ति सूत्रं कर्मताबोधकम्। तत्र कर्तुः क्रियाश्रयस्याप्तुमित्यत्र करणाकाङ्क्षायां यया क्रियया कर्ता तया आप्तुमिष्टतममिति समभिव्याहारलभ्यम्। यद्यपि क्रियया आप्तुमिष्टफलं तथापि फलाश्रयत्वेन तण्डुलाद्यपि इष्टतममिति[७४] तत्तत्कर्मसंज्ञं फलमपि धात्वर्थतावच्छेदकभूतं गृह्यते एकधातूपात्तत्वादिति निर्गलितोऽर्थः।

द्वेष्योदासनकर्मणोः संग्रहाय 'तथा युक्तं चानीप्सत'मिति सूत्रम्। दुहियाचिरुधिपृच्छिप्रक्षिचिञ्ब्रूञ्शासनिरवहिभ्रञ्जिक्लमन्धमुदण्डतानि समानार्थ-धात्वर्थक्रियासंबन्धत्वेन विवक्षितम्। यत्तत्क्रियासंबन्धि तत्क्रिया कर्म। यथा गां दोग्धि पय इत्यादि। एतत्संग्राहकञ्च 'अकथितञ्चे'ति सूत्रम्।

कर्तुमभिक्रुध्यति अभिद्रुह्यतीत्यत्र द्वितीयार्थः संबन्धः। अत्र 'क्रुधद्रुहोरुपसृष्टयोः कर्मे'ति सूत्रं कर्मत्वबोधकत्वम्।

अधिशेते अधितिष्ठति अध्यास्ते अधिनिविशते उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः। अत्र द्वितीयार्थश्चाधेयत्वम्। कर्तृघटितपरम्परया क्रियायामन्वेति। एतत्संग्राहकाणि च 'अधिशीङ्स्थासां कर्म' 'अभिनिविशश्च' 'उपान्वध्याङ्वसः' इति सूत्राणि। अत्रोपवसतिः न भोजननिवृत्त्यर्थः। तेन ग्रामे उपवसतीत्यत्र न कर्मत्वम्। उपोष्य रजनीमित्यत्र 'कालाध्वनोरत्यन्तसंयोग' इति द्वितीया न कर्मणीति।

अक्षान् दीव्यतीत्यत्र व्यापारानन्तर्यं द्वितीयार्थः। 'दिवः कर्म चे'त्यनेनात्र कर्मत्वम्। न च प्रागुक्तकरणत्वस्यातिव्याप्तिः। लक्ष्यत्वात्। एकस्यैव दीव्यति

---

[७४] मल.- इष्टमिति 

क्रियाकर्मकरणत्वे बाधकाभावात्। उक्तसकलकर्मान्यतमत्वादिसकलकर्मसाधारणं बोध्यम्।

फलेभ्यो यातीत्यत्र असमभिव्याहृततुमुन्णमुलन्तधातुप्रतिपाद्याहरणक्रिया-निरूपितकर्मकत्वं चतुर्थ्यर्थः। तथा च फलान्याहर्तुं यातीत्यर्थः।

न त्वां तृणाय मन्ये इत्यत्र कर्मत्वं चतुर्थ्यर्थः। एतच्चतुर्थी[७५]समभिव्याहारे प्रकृते स्वार्थसदृशो निरूढलक्षणा। तथा च त्वत्कर्मकं ज्ञानं तृणसदृशकर्माभिन्नमित्यर्थः। अत्र त्वत्कर्मकत्वविशिष्टे ज्ञाने तृणसदृशभिन्नकर्मकभेदः[७६]। त्वयि तृणसदृशभेदे पर्यवसति। तत्सदृशभेदश्चात्यन्तापकर्षप्रयुक्त एव। मन्येति कर्म चतुर्थीसमभिव्याहारे बुध्यत इति नोत्कृष्टेन त्वां तृणाय मन्यत इति प्रयोगः। पित्रा सञ्जानीत इत्यत्र कर्मत्वं तृतीयार्थः। तण्डुलस्य पाक इत्यत्र षष्ठ्यर्थ इति।

## कर्ता।

यद्धात्वर्थाश्रयत्वेन यो विवक्षितः स तत्कर्ता। धात्वर्थत्वं च धातुजन्य-बोधमुख्यविशेष्यत्वम्। तच्च धातुजन्यबोधविशेष्यतानिरूपितप्रकारतानाश्रयत्वे सति धातुजन्यबोधविषयत्वम्। द्वयोपादानेन रूपवन्तं गच्छतीत्यादौ उत्तरसंयोगादि[७७]रूपफले रूपादौ च न मुख्यविशेष्यत्वमिति। तदाश्रयत्वेन विवक्षितरूपवति न कर्तृलक्षणातिव्याप्तिः। न च पक्तेत्यादौ धातुजन्यपाककर्तृबोधविशेष्यतानिरूपितप्रकारताश्रयत्वात् पाकस्य कथं मुख्यविशेष्यत्वमिति वाच्यम्। धातुजन्यबोधस्य स्मरणरूपस्य प्रकृते विवक्षितत्वात्। वस्तुतः व्यापारयोः पृथक् धात्वर्थत्वमते फलमुख्यविशेष्यत्वं दुर्वारमिति। फलविशिष्टव्यापारबोधस्यैव प्रकृते धातुजन्यबोधशब्देन विवक्षितत्वात्[७८] न कोपि दोष इति बोध्यम्। चैत्रः पचति चैत्रेण पच्यते इत्यादौ तिङर्थे तृतीयार्थे वाश्रयभेदेन प्रथमान्तार्थस्य प्रकृतस्य चान्वयात् चैत्रादेः कर्तृत्वोपपत्तिः।

ननु मैत्रश्चैत्रेण पाचयतीत्यत्र पचिधात्वर्थस्य णिजन्तधात्वर्थविशेषणत्वात्

---

[७५]मल.- एकचतुर्थी

[७६]देव.- लुप्तम्

[७७]मल.- उक्त

[७८]मल.- विवक्षितत्वात्

मुख्यविशेष्यत्वाभावात् तथाश्रयत्वेन विवक्षिते मैत्रे कर्तृत्वं न स्यात्। न च धात्वर्थभेदेन कर्तृत्वभेदात् पच्यर्थस्य णिजन्तार्थविशेषणत्वेपि पच्यर्थाविशेषणत्वात् न मुख्यविशेष्यत्वक्षतिरिति वाच्यम्। तथा सति ग्रामं गमयति देवदत्तो यज्ञदत्तमित्यत्र यज्ञदत्तस्यापि कर्तृत्वापत्तिरिति चेत् इष्टत्वात्। अत एव प्रयोज्यकर्तेति व्यवहारः। व्यवहृतण्यन्ते कर्तुश्च कर्मण इति भाष्यकृतापि व्यवहारप्रयोजकं हि कारकलक्षणमिह निरुच्यत इति प्रागुक्तम्। तृतीयाप्रयोजककर्तृसंज्ञा तु एकसंज्ञाधिकारात् प्रधानणिजर्थक्रियाकर्मत्वेन बाधितेति न यज्ञदत्ते तृतीया। न च मैत्रः चैत्रेण पाचयतीत्यत्र मैत्रे द्वितीयापत्तिः। गम्यादीनामेव णिजन्तानां प्रयोज्यकर्तुः कर्मत्वेन मैत्रस्य पाचयति कर्मत्वाभावात्। एतच्च कर्मलक्षणे व्युत्पादितम्। कर्मकर्तरि तण्डुलः पचतीत्यादौ फलसमानाधिकरणव्यापारार्थत्वात् तदाश्रयत्वेन विवक्षिते तण्डुलादौ लक्षणसंगतिः। यत्तु कृत्याश्रयः कर्ता तदुपादानविषयतदनुकूलकृत्याश्रयः तत्कर्ता अन्यविषयतदनुकूलकृतिमादाय न कर्तृत्वव्यवहार इति। तदुपादानविषयकेति हविरादिगोचरस्वर्गविषयं कृतिमति स्वर्गकर्तेत्यवहारादुपानेति। आत्मा वा तस्य जठरस्य कृतिसत्त्वेऽपि क्रियाभावान्न कर्तृत्वम्। अतः तदनुकूलेति। तन्न। कारकलक्षणोक्तरीत्या रथस्य कर्तृत्वावश्यकत्वेपि[79] तत्राव्याप्तेः। किञ्च अन्यविषयकगमनानुकूलकृतिमति देवदत्ते गच्छतीति प्रयोगे भवदुक्तकारकलक्षणेनाक्रान्ते अव्याप्तिः। प्रकृतलक्षणालक्ष्यत्वे तु कारकलक्षणातिव्याप्तिः। कारकलक्षणालक्ष्यत्वे तु कारकषट्कत्वव्याघात इत्यास्तान्तावत्। चैत्रः तिष्ठति तत्र धात्वर्थे तिङर्थ आश्रयः। चैत्रः आश्रयभेदेनान्वेति। तथा च चैत्ररूपाश्रयवृत्तिस्थानमिति[80] बोधः।

चैत्रेण स्थीयत इत्यत्र धात्वर्थे तृतीयार्थ आश्रयः। उक्तसंबन्धः प्रकृत्यर्थतृतीयार्थेऽन्वेतीति पूर्ववदेव बोध इति। भवतश्च पदमित्यादौ षष्ठ्या अप्याश्रयोऽर्थः। बोधश्चोक्तरीत्यैवेति ध्येयम्।

इति शेषचक्रपाणिपण्डितविरचितं कारकतत्त्वं समाप्तम्।।

---

[79] मल.- पि लुप्तम्

[80] मल.- नष्टम् 

# अनुबन्धः-१

## ग्रन्थोक्तलक्षणवाक्यानां सूची।

1. कारकम्- वक्ष्यमाणापादानत्वाद्यन्यतमम् अपादानाद्यन्यतमत्वं समवेतविशेषसम्बन्धेन कारकशब्दो वा कारकत्वम्।
2. अपादानम्- यन्निष्ठविभागजनकत्वेन यन्निष्ठान्योन्याभावप्रतियोगिता-वच्छेदकत्वेन च या क्रिया विवक्षिता तत्त्वंतत् क्रियापादानत्वम्।
3. सम्प्रदानम्- यत्क्रिया सम्बन्धजन्य फलभगित्वेनोद्येश्यं यत् तत्तत्क्रिया सम्प्रदानम्।
4. करणम्- यद्व्यापाराव्यवहितोत्तरं यत्तत्क्रिया निष्पत्तिर्विवक्ष्यते तत्तत्क्रिया करणम् ।
5. अधिकरणम्- कर्तृकर्मान्यतरघटितपरम्परया यत्क्रियाश्रयत्वेन यो विवक्षितः सः तत्तत्क्रियाधिकरणम् ।
6. कर्म- परसमवेतं यत्क्रियाजन्यधत्वर्थतावच्छेदकफलशालि यत् तत्तत् क्रिया कर्म।
7. कर्ता- यद्धात्वर्थाश्रयत्वेन यो विवक्षितः स तत्कर्ता।

# अनुबन्धः-२

## ग्रन्थे चर्चितानां सूत्राणां सूची।

1. कारके(1-4- )
2. स्वतन्त्रः कर्ता (1-4-54)
3. कर्तुरीप्सिततमं कर्म(1-4-49)
4. तथायुक्तञ्चानीप्सितम्(1-4-50)
5. अकथितञ्च(1-4-51)
6. गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ(1-4-52)
7. ह्रक्रोरन्यतरस्याम्(1-4-53)
8. अधिशीङ्स्थासां कर्म(1-4-46)
9. अभिनिविशश्च(1-4-47)
10. उपान्वध्याङ्वसः(1-4-48)
11. साधकतमं करणम्(1-4-42)
12. कर्मणा यमभिप्रैति स सम्प्रदानम् (1-4-32)
13. रुच्यर्थानां प्रीयमाणः (1-4-33)
14. श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (1-4-34)
15. धारेरुत्तमर्णः (1-4-35)
16. स्पृहेरीप्सितः (1-4-36)
17. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः (1-4-37)
18. राधीक्ष्योर्यस्य विप्रश्नः (1-4-39)
19. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (1-4-40)
20. अनुप्रतिगृणश्च (1-4-41)
21. परिक्रयणे सम्प्रदानमन्यतरस्याम् (1-4-44)
22. ध्रुवमपायेऽपादानम् (1-4-24)
23. भीत्रर्थानां भयहेतुः (1-4-25)
24. पराजेरसोढः (1-4-26)

25. वारणार्थानामीप्सितः (1-4-27)
26. अन्तर्धौ येनादर्शनमिच्छति (1-4-28)
27. आख्यातोपयोगे (1-4-29)
28. जनिकर्तुः प्रकृतिः (1-4-30)
29. भुवः प्रभवः (1-4-31)
30. आधारोऽधिकरणम् (1-4-45)

# अनुबन्धः-३

## ग्रन्थे विद्यमानोदाहरणानां सूची।

| क्रमः | उदाहरणानि |
|---|---|
| 1. | पश्यतो राज्ञः पुरुषो गच्छति। |
| 2. | राज्ञः पुरुषो गच्छति। |
| 3. | नटस्य शृणोति। |
| 4. | सर्पिषो जानीते। |
| 5. | मातुः स्मरति। |
| 6. | राज्ञः पुरुषः ग्रामं गच्छति। |
| 7. | नटं शृणुवम्। |
| 8. | पच्यते तण्डुलम्। |
| 9. | भाविनं जानाति। |
| 10. | घटो भवति। |
| 11. | तण्डुलं पचति। |
| 12. | रथो गच्छति। |
| 13. | घटं साक्षात्करेति। |
| 14. | ग्रामादागच्छतोऽश्वात् पतति। |
| 15. | वृक्षस्य पर्णं पतति। |
| 16. | घटात् परः। |
| 17. | द्रव्यात् पतति। |
| 18. | वृक्षात् पतति पर्णे पर्णात् पर्णं पतति। |
| 19. | वृक्षात् वृक्षे पतति। |
| 20. | वृक्षात् पर्णं पतति। |
| 21. | वृक्षं त्यजति। |
| 22. | स्पन्दते पर्णम्। |
| 23. | आकाशादाकाशं गच्छति। |
| 24. | वृक्षात् विभजते। |

25. वलाहकात् विद्योतते विद्युत्।
26. अधर्मात् जुगुप्सते।
27. देवदत्तो अधर्मात् विरमति।
28. चैत्रो अधर्मात् विरमति।
29. आत्मा विरमति।
30. चोरात् बिभेति।
31. चोरात् परित्रायते।
32. व्याघ्रात् बिभेति।
33. कृष्णात् पराजयते।
34. अध्ययनात् पराजयते ।
35. शत्रून् पराजयते ।
36. यवेभ्यः गां वारयति।
37. कूपादन्धं वारयति।
38. उपाध्यात् अन्तर्धत्ते शिष्यः।
39. पुत्रात् प्रमोदो जायते।
40. हिमवतो गङ्गा प्रवहति।
41. विप्राय धनं ददाति।
42. वृक्षाय उदकं सिञ्चति।
43. अजां ग्रामं नयति।
44. रजकस्य वस्त्रं ददाति।
45. घ्नतः पृष्ठं ददाति।
46. तस्मै चपेटां ददात्।
47. रजकाय वस्त्रं ददाति।
48. पत्ये शेते।
49. कटं करोति।
50. देवदत्ताय रोचते मोदकम्।
51. देवदत्ताय श्लाघते, अनुतिष्ठते, शयते।
52. देवदत्ताय शतं धारयते।
53. पुष्पेभ्यः स्पृहयति।

54. शत्रवे क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति।
55. कृष्णाय राध्यति, ईक्षति।
56. विप्राय गां प्रतिशृणोति।
57. होत्रे अनुगृह्णाति।
58. शताय परिक्रीणाति।
59. शतेन परिक्रीणाति।
60. स्थाल्या पच्यते।
61. काष्ठेन पचति।
62. स्तोकेन स्तोकाद्वा मुक्तः।
63. भूतले देवदत्तः पचति।
64. स्थाल्यां तण्डुलान् पचति।
65. भूतले घटः अस्ति।
66. अन्तरीक्षे घटो न पचति।
67. अन्तरीक्षे घटो पचति।
68. भूतले घटो नास्ति।
69. गङ्गायां घोषः।
70. तिलेषु तैलम्।
71. घटे ज्ञानम्।
72. भूतले अस्ति।
73. देवदत्तो गच्छति।
74. ग्रामं गच्छति।
75. गम्यते ग्रामः।
76. देवदत्तं गमयति।
77. वाचयति देवदत्तेन यज्ञदत्तः।
78. हारयति, कारयति भृत्येन कटम्।
79. घटं करोति, जानाति।
80. काष्ठं भस्म करोति।
81. प्रक्रम्य तण्डुलान् ओदनं पचति।
82. गां दोग्धि पयः।

83. कर्तुं अभि क्रुध्यति, अभिद्रुह्यति।
84. अधिशेते, अधितिष्ठति, अध्यास्ते, अधिनिविशते, उपवसति, अनुवसति, अधिवसति, आवसति, वा वैकुण्ठं हरिः।
85. ग्रामे उपवसति।
86. उपोष्य रजनीम्।
87. अक्षान् दीव्यति।
88. फलेभ्यो याति।
89. न त्वां तृणाय मन्ये।
90. पित्रा सञ्जानीते।
91. तण्डुलस्य पाकः।
92. चैत्रः पचति।
93. चैत्रेण पच्यते।
94. मैत्रः चैत्रेण पाचयति।
95. ग्रामं गमयति देवदत्तः यज्ञदत्तम्।
96. तण्डुलः पचति।
97. चैत्रः तिष्ठति।

# अनुबन्धः-५

## देवनागरीमातृका




॥ श्रीः ॥

। कारकतत्वम् ।

साधयति नेहमानन्देहविहीनश्च येह जगदीशम् ।
सामर्थ्य सेवकभावं प्राप्तेवान्देवता दयताम् ॥
विरोधिनां तिरोधानक्षमो यस्य गिरां गणः ।
विश्वेश्वरगुरुं शेषवंशोत्तंसमहं भजे ॥

कारकतत्वं चिन्त्यते — तत्र वक्ष्यमाणापादानत्वाद्यन्यतमं अपादान
द्यन्यतमत्वं सङ्केतविशेषसम्बन्धेन कारकशब्दो वा कारकत्वं कारकव्यव
विषयतावच्छेदकं तदज्ञाने कारकव्यवहाराभावात् तदुक्तं हरिणा

सामान्यान्यभिधीयन्ते सत्ता वा तैर्विशेषिताम् ।
संज्ञाशब्दस्वरूपं वा प्रत्ययैस्त्वतलादिभिः । इति ।

तत्तत्क्रियाकारकत्वन्तु तत्तत्क्रियापादानत्वाद्यन्यतमादि, चरमपक्षे सङ्के
म्बन्धेनेत्यत्र बोध्यत्वविशेषसम्बन्धेनेति वाच्यं । तत्तत्क्रियाकारकशब्दस्य सङ्के
भावात् । लक्षणे क्रियाविशेषप्रवेशात् । पश्यतो राज्ञः पुरुषो गच्छतीत्यत्र दर्श
रकस्यापि राज्ञो न गमनकारकत्वमिति । न चाकर्मकक्रियादेः कर्मत्वाद्यप्रसिद्ध
कथन्तत्र घटितान्यतमादि तत्क्रियाकारकत्वं वाच्यमिति वाच्यम् । यत्र यद्यत

# सहायकग्रन्थसूची।

1. आधारमातृका - मातृकासंख्या 3334 (देवनागरी), सर्वकारीयप्राच्य-मातृकागारः, चेन्नै।

2. आधारमातृका - मातृकासंख्या 1803 (मलयालम्), तिरुवनन्तपुरप्राच्य-मातृकागारः, तिरुवनन्तपुरम्।

3. अष्टाध्यायी, आचार्य हरिप्रसादः, महेन्द्र संस्कृतविश्वविद्यालयः, नेपालः, 2000

4. व्याकरणमहाभाष्यम्, आचार्य गुरुप्रसादशास्त्री, प्रतिभाप्रकाशान्, नई दिल्लि, 1999

5. काशिकावृत्ति, रघुवीरवेदालङ्कारः, प्राच्यविद्याप्रतिष्ठानम्, नई दिल्लि, 1997

6. भारतीयग्रन्थसम्पादनशास्त्रप्रवेशिनी, Prof. L. N Bhatt, Dr. J. Ramakrishna, Dr. Viroopaksh V. Jaddipal, Rashtriya Sanskrit Vidyapeetha, Tirupati, 2002

7. पदमञ्जरी, पि. श्रीरामचन्द्रुडु, संस्कृतपरिषत्,हैदराबाद्, 1981

8. वाक्यपदीयम्, के.ए. सुब्राह्मण्य अय्यर्, डेक्कान् कोलेज्,पूने, 1963

9. वाक्यपदीयम्(ब्राह्मकाण्डम्), वामदेवशास्त्री, चौखम्बासंस्कृतप्रतिष्ठान्, वाराणसी, 2000

10. संस्कृतशोधप्रविधिः, आचार्य सत्यनारायणः, राष्ट्रियसंस्कृतसंस्थानम्, 2005

11.वैय्याकरणसिद्धान्तकौमुदी, परमेश्वरानन्दशार्मा, मोत्तिलाल् बनारसीदास्, वाराणसी,2000

12.कारकप्रकरणम्, रामरङ्गशार्मा, भारतीयविद्याप्रकाशानम्,नई दिल्लि,1997

13.वैय्याकरणसिद्धान्तलघुमञ्जूषा, माधवशास्त्री भण्डारी, चौखम्बा संस्कृत सीरिस्, वाराणसी, 1989

14.कारकमीमांसा, मोत्तिलाल् जोशी, राजस्थानसंस्कृतसम्मेलन्, जयपूर्, 2001